**Government Oriental Library Series**

BIBLIOTHECA SANSKRITA—No. 19.

# SRI-SANKARACHARYA'S



## MISCELLANEOUS WORKS.

## Vol. I.

# श्रीशङ्करभगवत्पादीयप्रकरणप्रबन्धावलिः.

## प्रथमसंपुटम्.

EDITED BY

A. MAHA'DEVA S'A'STRI, B.A.,
*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,
*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of
His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS,

1898.

# PREFACE.

S'rî-S'ankarâchârya's commentaries on what is called the Prasthânatraya, the threefold basis of the Vedântic doctrine comprising the Upanishads, the Bhagavadgîtâ and the S'ârîraka-Mîmâmsâ-Sûtra, are undoubtedly the most genuine of his productions. Besides these, there are many other works—commentaries as well as independent treatises on Vedântic philosophy, and devotional hymns—ascribed to him. It is by his miscellaneous works including many popular Vedântic tracts and devotional hymns that his doctrine is known to the people at large. They are deservedly held in high esteem as embodying loftiest thoughts in a simple lucid and altogether enchanting form. They are so popular with the Hindus of average education that many a popular devotional hymn, by whomsoever written in imitation of his genuine ones, are fathered upon him and are read as if they were his own. Though, under these circumstances, there is no guarantee that all the works that go by his name are his genuine productions, yet it is desirable to compile in one place all his miscellaneous works excepting of course those that bear clear marks of spuriousness on their very face, if only with a view to afford to the student materials from which to pick up the most genuine ones. The Editor does not undertake the serious responsibility of making the choice, inasmuch as, if he were to do so, he is afraid that he may run the risk of setting aside much that has been held very sacred by devout admirers of the Great Teacher. But even those pieces which are of doubtful genuineness have their own value, at the worst as imitations of the great popular writer, or as forming a well-edited collection of tracts and religious lyrics which have been a source of spiritual and philosophical instruction to many a pious and enquiring Hindu.

This volume forming the first part of S'rî-S'ankarâchârya's miscellaneous works comprises his commentaries on Vishṇu-sahasranâma and Sanatsujâtîya, which, like the Bhagavadgîtâ, are among the most precious gems he has dug out of the mine of the Mahâbhârata. None of the published editions of these two commentaries seems to have been prepared with the care which the corrupt state of most of the manuscripts of the works demands. The present edition has been prepared from best manuscripts found in the Government Oriental Library and in the libraries of several mutts in this province including the S'ringeri Mutt. Târaka-Brahmânandasarasvatî's gloss on the commentary on Vishṇusahasranâma obtained from the S'ringeri Mutt has been often consulted, and it has proved very helpful in fixing the text of the commentary wherever the manuscripts of the latter differed widely from one another.

A. M. S.

# विष्णुसहस्रनामस्तोत्रविषयसूची.

श्लो.



## विष्णुसहस्रनामभाष्यस्थविशेषविषयसूची.

# सनत्सुजातीयविषयसूची.

## प्रथमोध्यायः.



## द्वितीयोध्यायः.

## तृतीयोऽध्यायः.



## चतुर्थोऽध्यायः.



## सनत्सुजातीयभाष्यस्थविशेषविषयसूची.



———

# नाम्नामकारादिक्रमेण सूची श्लोकसंख्यासहिता.

## अ

## आ



## इ



## ई

## ख



## ग



## घ



## च

## छ



## ज



## त



## द

## ध



## न

## प

## ब



## भ

## म

## य



## र



## ल

## व

## श

## स

इति नाम्नामकारादिसूचिका समाप्ता.

---

ओं

# श्रीविष्णुसहस्रनामस्तोत्रम्.

## श्रीशङ्कराचार्यविरचितभाष्यसहितम्.

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥

कृष्णद्वैपायनं व्यासं सर्वभूतहिते रतम् ।
वेदाब्जभास्करं वन्दे शमादिनिलयं मुनिम् ॥ २ ॥

सहस्रमूर्तेः पुरुषोत्तमस्य सहस्रनेत्राननपादबाहोः ।
सहस्रनाम्नां स्तवनं प्रशस्तं निरुच्यते जन्मजरादिशान्त्यै ॥३॥

॥ श्रीवैशम्पायन उवाच ॥

श्रीवैशम्पायनः जनमेजयं प्रत्युवाच—

**श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।**
**युधिष्ठिरश्शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥**

धर्मान् अभ्युदयनिश्श्रेयसोत्पत्तिहेतुभूतान् वेदलक्षणान् अशेषेण कार्त्स्न्येन पावनानि पापक्षयकराणि धर्मरहस्यानि च सर्वशः सर्वैः प्रकारैः श्रुत्वा युधिष्ठिरो धर्मपुत्रः शान्तनवं शन्तनुपुत्रं

भीष्मं सकलपुरुषार्थसाधनं अल्पप्रयासं अनल्पफलमनुक्तमिति मत्वा पुनः भूय एव अभ्यभाषत प्रश्नं कृतवान् ॥ १ ॥

॥ युधिष्ठिर उवाच ॥

**किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।**
**स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाश्शुभम् ॥ २ ॥**

**किमेकं दैवतं** देव इत्यर्थः, स्वार्थे तद्धितविधानात् । **लोके** लोकनहेतुभूते समस्तविद्यास्थाने उक्तम् । कि **वाऽप्येकं परायणं** तस्मिन् लोके एकं परायणं च किम् । परमयनं प्राप्तव्यं स्थानं परायणम् । यदाज्ञया प्रवर्तन्ते सर्वे, यस्मिन्नधिगते हृदयग्रन्थि-भिद्यते—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥[1]

इति श्रुतेः, यस्य विज्ञानमात्रेण आनन्दलक्षणो मोक्षः प्राप्यते, यद्विद्वान्न बिभेति कुतश्चन, यत्प्रविष्टस्य न विद्यते पुनर्भवः; यस्य च वेदनात्तदेव भवति 'ब्रह्म वेद ब्रह्मैव भवति'[2] इति श्रुतेः, यद्विहायापरः पन्था नृणां नास्ति, 'नान्यः पन्था विद्यतेऽयनाय'[3] इति श्रुतेः, तदुक्तं एकं परायणम् । 'लोके तत्किम्' इति द्वितीयः प्रश्नः । **कं** कतमं देवं **स्तुवन्तः** गुणकीर्तनं कुर्वन्तः कं कतमं देवं **अर्चन्तः** बाह्यमाभ्यन्तरं वा अर्चनं बहुविधं कुर्वन्तः **मानवाः** मनुसुताः **शुभं** कल्याणं स्वर्गापवर्गादिफलं **प्राप्नुयुः** लभेरन् इति पुनः प्रश्नद्वयम् ॥ २ ॥

[1] मुण्ड. २-२-८. [2] मुण्ड. ३-२-९. [3] तै. आ. ३-१३.

**को धर्मस्सर्वधर्माणां भवतः परमो मतः ।**
**किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ३ ॥**

**को धर्मः** पूर्वोक्तलक्षणः **सर्वधर्माणां** सर्वेषां धर्माणां मध्ये **भवतः परमः** प्रकृष्टो धर्मो **मतः** अभिप्रेतः इति पञ्चमः प्रश्नः । **किं** जप्यं **जपन्** उच्चोपांशुमानसलक्षणं जपं कुर्वन् **जन्तुः** जननधर्मा । अनेन जन्तुशब्देन जपार्चनस्तवनादिषु यथायोग्यं सर्वप्राणिनामधिकारं सूचयति । **जन्मसंसारबन्धनात्** जन्म अज्ञानविजृम्भितानामविद्याकार्याणां उपलक्षणम् । संसारः अविद्या । ताभ्यां जन्मसंसाराभ्यां यत् बन्धनं तस्मात् **मुच्यते** मुक्तो भवति इति षष्ठः प्रश्नः । **मुच्यते जन्मसंसारबन्धनात्** इति इदमुपलक्षणं इतरेषां फलानामपि । तद्ग्रहणं तु मोक्षप्राधान्यख्यापनार्थम् ॥ ३ ॥

॥ श्रीभीष्म उवाच ॥

सर्वेषां बहिरन्तश्शत्रूणां भयहेतुः **भीष्मः** मोक्षधर्मादीनां प्रवक्ता सर्वज्ञः ॥

षट्प्रश्नाः कथिताः । तेषु पाश्चात्योऽनन्तरो जप्यविषयः षष्ठः प्रश्नोऽनेन श्लोकेन परिह्रियते—

**जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।**
**स्तुवन्नामसहस्रेण पुरुषस्सततोत्थितः ॥ ४ ॥**

**जगत्** जङ्गमाजङ्गमात्मकं तस्य **प्रभुः** स्वामी तं **देवदेवं** देवानां ब्रह्मादीनां देवं **अनन्तं** देशतः कालतः वस्तुतश्चापरि-

च्छिन्नम् । **पुरुषोत्तमं** क्षराक्षराभ्यामुत्कृष्टं **नामसहस्रेण स्तुवन्** गुणसंकीर्तनं कुर्वन् **सततोत्थितः** निरन्तरमुद्युक्तः **पुरुषः** पुरे शयनाद्वा पूर्णत्वाद्वा पुरुषः । 'सर्वदुःखातिगो भवेत्' इति सर्वत्र संबध्यते ॥ ४ ॥

उत्तरेण श्लोकेन चतुर्थः प्रश्नः परिह्रियते—

**तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।**
**ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥**

**तमेव चार्चयन्** बाह्यं अभ्यर्चनं कुर्वन् **नित्यं** सर्वेषु कालेषु भक्तिः भजनं तात्पर्यं तया **भक्त्या पुरुषं अव्ययं** विनाशक्रियारहितं **तमेव च ध्यायन्** आभ्यन्तरार्चनं कुर्वन् **स्तुवन्** पूर्वोक्तरीत्या भक्त्या **नमस्यंश्च** नमस्कारं कुर्वन् पूजाशेषभूतमुभयं स्तुतिनमस्कारलक्षणं **यजमानः** पूजकः फलभोक्ता । अथवा—अर्चयन्नित्यनेनोभयमर्चनमुच्यते । ध्यायंस्तुवन्नमस्यंश्चेत्यनेन मानसं वाचिकं कायिकं चोच्यते ॥ ५ ॥

तृतीयं प्रश्नं परिहरति त्रिभिरुत्तरैः पादैः—

**अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।**
**लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥**

**अनादिनिधनं** षड्भावविकारशून्यं, **विष्णुं** व्यापकं, सर्वस्य लोक्यत इति लोकः दृश्यवर्गो लोकः तस्य नियन्तॄणां ब्रह्मादीनामपि ईश्वरत्वात् **सर्वलोकमहेश्वरं**, लोकं दृश्यवर्गं स्वाभाविकेन बोधेन साक्षात्पश्यतीति **लोकाध्यक्षः** तं **नित्यं** निरन्तरं **स्तुवन्**

र्वदुःखातिगो भवेत् इति त्रयाणां साधारणं फलवचनम्। र्वाण्याध्यात्मिकादीनि दुःखान्यतीत्य गच्छतीति सर्वदुःखातिगः वेत् स्यात ॥ ६ ॥

पुनरपि तमेव स्तुत्यं विशिनष्टि—

**ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम्।**
**लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥**

**ब्रह्मण्यं** ब्रह्मणे स्रष्टे ब्राह्मणाय तपसे श्रुतये वा हितम्। सर्वधर्मान् जानातीति **सर्वधर्मज्ञः** तम्। **लोकानां** प्राणिनां कीर्तयो यशांसि ता स्वशक्त्यनुप्रवेशेन वर्धयन्तम्। लोकैर्नाथ्यते याच्यते, लोकानुपतपति आशास्ते, लोकानामीष्टे इति वा **लोकनाथः** तम्। महत् ब्रह्म, विश्वोत्कर्षेण वर्तमानत्वात्। भूतं परमार्थसत्यं सर्वभूतभवोद्भवं सर्वभूताना भवः संसारो यत्सकाशादुद्भवति तम् ॥ ७ ॥

पञ्चमं प्रश्न परिहरति—

**एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।**
**यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा ॥ ८ ॥**

सर्वेषां वेदलक्षणाना **धर्माणां एष** वक्ष्यमाणो **धर्मो अधिकतमः** इति **मे** मम **मतः** अभिप्रेतः **यद्भक्त्या** तात्पर्येण **पुण्डरीकाक्षं** हृदयपुण्डरीके प्रकाशमानं वासुदेवं **स्तवैः** गुणसंकीर्तनलक्षणैः स्तुतिभिः **सदा अर्चेत्** सत्कारपूर्वकमर्चनं करोति **नरो** मनुष्य इति **यत् एष धर्म** इति सम्बन्धः ॥

अस्य स्तुतिलक्षणस्याधिक्ये किं कारणम्? उच्यते—हिंसादि-पुरुषान्तरद्रव्यान्तरदेशकालादिनियमानपेक्षत्वमाधिक्ये कारणम् ॥

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥[1]

इति विष्णुपुराणवचनात् ।

जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥[2]

इति मनुवचनात् ।

जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते ।
अहिंसया च भूतानां जपयज्ञः प्रवर्तते ॥

इति महाभारते ।

यज्ञानां जपयज्ञोस्मि...................... ।[3]

इति भगवद्वचनम् । एतत्सर्वमभिप्रेत्य

एष मे सर्वधर्माणां धर्मोधिकतमो मतः । इत्युक्तम् ॥ ८ ॥

द्वितीय प्रश्न समाधत्ते—

**परमं यो महत्तेजः परमं यो महत्तपः।**
**परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥**

परमं प्रकृष्ट महत् बृहत् तेजः चैतन्यलक्षणं सर्वावभासकम् 'येन सूर्यस्तपति तेजसेद्धः'[4] 'तं देवा ज्योतिषां ज्योतिः'[5] 'न तत्र सूर्यो भाति न चन्द्रतारकं'[6] इत्यादिश्रुतेः, 'यदादित्यगतं तेजः'[7] इत्यादिस्मृतेश्च । परमं तपः तपत्याज्ञाप-

[1] ६-२-१७. [2] २-८७. [3] भगव १०-२५.
[4] तै. ब्रा. ३-१२-९. [5] बृ. ६-४-१६. [6] मुण्ड. २-२-१०. [7] भ. गी. १५-१२.

यतीति तपः । 'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योन्तरो यमयति'[1] इत्यन्तर्यामिब्राह्मणे सर्वनियन्तृत्वं श्रूयते । 'भीषाऽस्माद्वातः पवते'[2] इत्यादि तैत्तरीयके । तपति ईष्टे इति वा तपः । तस्यैश्वर्यमनवच्छिन्नमिति महत्त्वम्, 'एष सर्वेश्वरः'[3] इत्यादिश्रुतेः । परमं सत्यादिलक्षणं परं ब्रह्म महनीयतया महत् । परमं प्रकृष्टं पुनरावृत्तिशङ्कावर्जितम् । परायणं परमयनं परायणम् । परमग्रहणात्सर्वत्र अपरं तेज आदित्यादिकं व्यावर्त्यते । सर्वत्र यो देवः इति विशेष्यते— यो देवः परमं तेजः परमं तपः परमं ब्रह्म परमं परायणं स एकस्सर्वभूतानां परायणमिति वाक्यार्थः ॥ ९ ॥

प्रथमप्रश्नस्योत्तरमाह—

**पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ॥**
**दैवतं देवतानां च भूतानां योऽव्ययः पिता॥ १० ॥**

**पवित्राणां** पावनानां तीर्थादीनां **पवित्रम्** । परमस्तु पुमान् ध्यातो दृष्टः कीर्तितः स्तुतः संपूजितः स्मृतः प्रणतः पाप्मनः सर्वानुन्मूलयतीति परमं पवित्रम् । संसारबन्धहेतुभूतं पुण्यापुण्यात्मकं कर्म तत्कारणं चाज्ञानं सर्वं नाशयति स्वयाथात्म्यज्ञानेनेति वा पवित्राणां पवित्रम् ।

रूपमारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान् ।
ददाति ध्यायतो नित्यमपवर्गप्रदो हरिः ॥
चिन्त्यमानस्समस्तानां क्लेशानां हानिदो हि यः ।
समुत्सृज्याखिलं चिन्त्यं सोच्युतः किं न चिन्त्यते ॥
ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु ।
प्रायश्चित्तं हि सर्वस्य दुष्कृतस्येति वै श्रुतिः ॥

---

[1] बृ. ५-७-१. [2] तै. ३, २-८. [3] बृ. ६-४-२२.

संसारसर्पसंदष्टनष्टचेष्टैकभेषजम् ।
कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः ॥

अतिपातकयुक्तोपि ध्यायन्निमिषमच्युतम् ।
भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥

हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितैः ।
ओमित्येवं सदा विप्राः पठत ध्यात केशवम् ॥[1]

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥[2]

यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥[3]

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यस्सिंहत्रस्तैर्मृगैरिव ॥[3]

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥[4]

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥

ज्ञानतोऽज्ञानतो वाऽपि वासुदेवस्य कीर्तनात् ।
तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसां ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यस्स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं तदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥[5]

शमायालं जलं वह्नेस्तमसो भास्करोदयः ।
शान्तिः कलौ ह्यघौघस्य नामसंकीर्तनं हरेः ॥[5]

हरेर्नामैव नामैव नामैव मम जीवनम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥

---

[1]हरिवंशे–२८० अध्याये. [2]मुण्डकोपनिषदि, २-२.
[3]विष्णुपु. ६-८, [4]विष्णुपु. ६-२, [5]विष्णुध. ६६-७४,

स्तुत्वा विष्णुं वासुदेवं विपापो जायते नरः।
विष्णोस्सम्पूजनान्नित्यं सर्वपापं प्रणश्यति॥

सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः॥

नित्यं संचिन्तयेद्देवं योगयुक्तो जनार्दनम्।
साऽस्य मन्ये परा रक्षा को हिनस्त्यच्युताश्रयम्॥

गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु।
यत्पापं विलयं याति स्मृते नश्यति तद्धरौ॥

मुहूर्तमपि यो ध्यायेन्नारायणमनामयम्।
सोऽपि सिद्धिमवाप्नोति किं पुनस्तत्परायणः॥

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम्*॥

कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम्।
प्रयाति विलयं सद्यस्सकृद्यत्रानुसंस्मृते॥*

सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम्।
पापराशिं दहत्याशु तूलराशिमिवानलः॥

यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्॥*

एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम्॥

जनार्दनं भूतपतिं जगद्गुरुं स्मरन्मनुष्यः सततं महामुने।
दुःखानि सर्वाण्यपहन्ति साधयत्यशेषकार्याणि च यान्य-
(भीप्सते॥

एवमेकाग्रचित्तस्सन् संस्मरन्मधुसूदनम्।
जन्ममृत्युजराग्राहं संसाराब्धिं तरिष्यति॥

कलावत्रापि दोषाढ्ये विषयासक्तमानसः।
कृत्वाऽपि सकलं पापं गोविन्दं संस्मरन् शुचिः॥

वासुदेवे मनो यस्य जपहोमार्चनादिषु।
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम्॥*

---

*विष्णुपु. २-६. ६-८. ६-७. २-६.

लोकत्रयाधिपतिमप्रतिमप्रभावं
ईषत्प्रणम्य शिरसा प्रभविष्णुमीशम् ।
जन्मान्तरप्रलयकल्पसहस्रजातं
आशु प्रणाशमुपयाति नरस्य पापम् ॥
एकोऽपि कृष्णे सुकृतप्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥
अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥
शाठ्येनापि नमस्कारः प्रयुक्तश्चक्रपाणये ।
संसारमूलबन्धानामुच्छेदजनको हि सः ॥

इत्यादिश्रुतिस्मृतीतिहासपुराणवचनेभ्यः । **मङ्गळानां च मङ्गळं** मङ्गळं सुखं तत्साधनं तज्ज्ञापकं च, तेषामपि परमानन्दलक्षणं परं मङ्गलमिति मङ्गलानां च मङ्गलम् । **दैवतं देवतानां च** देवानां देवः द्योतनादिभिः समुत्कर्षेण वर्तमानत्वात् । **भूतानां यः अव्ययः** व्ययरहितः **पिता** जनकः यो देवः स एकं दैवतं लोक इति वाक्यार्थः ॥

एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च ॥
यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥*

इति श्वेताश्वतराणां मन्त्रोपनिषदि । 'सेयं देवतैक्षत' 'एकमेवाद्वितीयम्'† इति छान्दोग्ये ॥

ननु कथमेको देवः जीवपरयोर्भेदात्—न, 'तत्सृष्ट्वा । तदेवानुप्राविशत्'‡ 'स एष इह प्रविष्ट आनखाग्रेभ्यः'§ इत्यादिश्रुतिभ्योऽविकृतस्य परस्य बुद्धितद्वृत्तिसाक्षित्वेन प्रवेशश्रवणादभेदः ॥

*६-११, १८. †६-२. ‡तै. उ. २-६. §बृ. ३-४.

प्रविष्टानामितरेतरभेदात् परात्मैकत्वं कथमिति चेत्—न, 'एको देवो बहुधा सन्निविष्टः'* 'एकस्सन् बहुधा विचारः'† 'त्वमेकोसि बहूननुप्रविष्टः'* इत्येकस्यैव बहुधा प्रवेशश्रवणात् प्रविष्टानां परस्य च न भेदः।

'हिरण्यगर्भ'‡ इत्यष्टौ मन्त्राः 'कस्मै देवाय'‡ इत्यत्र एकार-लोपेनैकदेवत्वप्रतिपादकाः तैत्तिरीयके।

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च॥
वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च॥
सूर्यो यथा सर्वलोकस्य चक्षुः न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥
एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥
नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान्।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिश्शाश्वती नेतरेषाम्॥§

इति काठके॥ 'ब्रह्म वा इदमग्र आसीत्तदेकं सन्नव्यभवत्' 'नान्योतोस्ति द्रष्टा'¶ इत्यादि बृहदारण्यके। 'अनेजदेकं मनसो जवीयः' 'तत्र को मोहः कश्शोक एकत्वमनुपश्यतः' इतीशावास्ये। 'सर्वेषां भूतानामन्तरः पुरुषः स म आत्मेति विद्यात्'** 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किंचन'**। 'एकं सद्विप्रा बहुधा वदन्ति'†† 'एकं सन्तं बहुधा

* तै. आ. ३-१४. † तै. आ. ३-११. ‡ तै. स. ४-१-८. §२-२, ¶३-४-११, ५-७-२३. **एत-आर. ३-२-४, २-४-१. ††स. १-१६४-४६.

कल्पयन्ति'* । 'एको विममे त्रिभिरित्पदेभिः'* 'एको दाधार भुवनानि विश्वा'* इति ऋग्वेदे । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'† इति छान्दोग्ये ।

सर्वभूतस्थित यो मां भजत्येकत्वमास्थितः ॥‡
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥

इत्यादि ॥

अहमात्मा गुडाकेश सर्वभूताशयस्थित ॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

इति भगवद्गीतासु ॥

हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितैः ।
ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम् ॥§
आश्चर्यं खलु देवानामेकस्त्वं पुरुषोत्तम ।
धन्यश्चासि महाबाहो लोके नान्योस्ति कश्चन ॥

इति हरिवंशे । भवति च मनोर्माहात्म्यख्यापिनी श्रुतिः—'यद्वै किं च मनुरवदत्तद्भेषजम्'¶ इति ॥ मनुना चोक्तम्—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति ॥ इति ॥**

सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥††

---

*स. १०-११४-५. १-१५४-३. १-१५४-४. †६-२.
‡६-३१. ५-१८. १०-२०. १३-३०. १३-३३. १८-६६. §२८०.
¶तै. स. २-२-१०. **१२-९१. भवति चेत्यारभ्य मनुवचनं केषु चित्कोशेषु न दृश्यते. ††१.२.

तस्मान्न विज्ञानमृतेऽस्ति किंचित् क्वचित्कदाचिद्द्विज वस्तु-
(जातम्।
विज्ञानमेकं निजकर्मभेदात् विभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकस्सदैकः परमः परेशः स वासुदेवो न यतोन्यदस्ति ॥*
यदा समस्तदेहेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान् सोहमित्येतद्विफलं वचः ॥*
सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्माऽपि तथैकस्सन् पृथक् पृथक् ॥

एकस्समस्तं यदिहास्ति किंचित्
तदच्युतो नास्ति परं ततोन्यत् ।
सोहं स च त्वं स च सर्वमेतत्
आत्मस्वरूप त्यज भेदमोहम् ॥

इतीरितस्तेन स राजवर्यः तत्याज भेदं परमार्थदृष्टिः ।*
सकलमिदमहं च वासुदेव परमपुमान् परमेश्वरस्स एकः ।
इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान् विहाय दूरात् ॥*
यदाह वसुधा सर्वं सत्यमेतद्दिवौकसः ।
अहं भवो भवन्तश्च सर्वं नारायणात्मकम् ॥
विभूतयस्तु यास्तस्य तासामेव परस्परम् ।
आधिक्यन्यूनता बाध्यबाधकत्वेन वर्तते ॥*
भवानहं च विश्वात्मन्नेक एव हि कारणम् ।
जगतोस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥
त्वया यदभयं दत्तं तद्दत्तमभयं मया ।
मत्तोऽविभिन्नमात्मानं द्रष्टुमर्हसि शङ्कर ॥
योहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदृष्टयः ॥*

इति श्रीविष्णुपुराणे ॥

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव वा ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥

---

*२-१२, २-१३, २-१६, ३-७, ५-१, ५-३३.

ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः ।
ब्रह्माणं च ततस्तस्मात् ब्रह्महत्यासमं त्वघम् ॥

इति भविष्यत्पुराणे महेश्वरवचनम् ।

आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् ।
त्वत्तस्समभवद्विश्वं त्वयि सर्वं प्रलीयते ॥
अहं त्वं सर्वगो देव त्वमेवाहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥
नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥
त्वदुपास्या जगन्नाथ सैवास्तु मम गोपते ।
यश्च त्वां द्वेष्टि भो देव स मां द्वेष्टि न संशयः ॥
त्वद्विस्तारो यतो देव ह्यहं भूतपतिस्ततः ।
न तदस्ति विना देव यत्ते विरहितं क्वचित् ॥
यदासीद्वर्तते यच्च यच्च भावि जगत्पते ।
सर्वं त्वमेव देवेश विना किंचित्त्वया न हि ॥*

इति हरिवंशे कैलासयात्रायां महेश्वरवचनम् ।

अपिच—'आत्मेति तूपगच्छन्ति ग्राहयन्ति च'+ । आत्मेत्येवं शास्त्रोक्तलक्षणः परमात्मा प्रतिपत्तव्यः । तथा हि—परमात्मप्रक्रियायां जाबाला आत्मत्वेनैवेनमभ्युपगच्छन्ति । 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति । तथाऽन्येऽपि 'यदेवेह तदमुत्र यदमुत्र तदन्विह'‡ । 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः'§ 'तदात्मानमेवावैदहं ब्रह्मास्मीति'¶ 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म'¶ 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म'¶ इत्येवमादयः आत्मत्वोपगमा द्रष्टव्याः । ग्राहयन्ति चात्मत्वेनेश्वरं वेदान्तवाक्यानि—'एष त आत्माऽन्तर्याम्यमृतः'¶

*२७९. आदिस्त्वमित्यादिहरिवंशवचनानि केषुचित्कोशेषु न दृश्यन्ते. +ब्र-सू-४-१-३. ‡कठो. १०-४०. §तै. उ. २-९. ¶बृह-३-४. ४-५. ५-४. ५-७.

**यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते ॥***

'तत्सत्यं स आत्मा तत्त्वमसि'† इत्येवमादीनि ॥

ननु प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यति—तदयुक्तम्, गौणत्वप्रसङ्गात्, वाक्यवैरूप्याच्च । यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति । यथा—'मनो ब्रह्म'। 'आदित्यो ब्रह्म'‡ इति । इह पुनः 'त्वमहमस्मि अहं वै त्वमसि' इत्याह । अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिः ।

भेददृष्ट्यपवादाच्च । तथाहि—'अथ योऽन्यां देवतामुपास्ते अन्योसावन्योहमस्मीति न स वेद यथा पशु'§ 'मृत्योस्समृत्युमाप्नोति य इह नानेव पश्यति' ।§ 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति एवं धर्मान् पृथक् पश्यंस्तानेवानु विधावति'¶ 'द्वितीयाद्वै भयं भवति'§ 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषो मन्वानस्य'** 'सर्वं तं परादाद्योन्यत्रात्मनस्सर्वं वेद'§ इत्येवमाद्या भूयसी श्रुतिर्भेददृष्टिमपवदति । तथा 'अत्मैवेदं सर्वं'§ 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति'§ 'इदं सर्वं यदयमात्मा'§ 'ब्रह्मैवेदं सर्वम्' ॥ इति श्रुतिः । तथा स्मृतिरपि—

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥††**

क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ॥

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥††**

---

*केनो-१-५. †छान्दो-६-८. ‡छान्दो.३-१८, ३-१९.
§बृह-३-४. ५-४. ३-४. ४-४. ५-५. ४-४. ¶कठो ४-१४.
**तै. उ. २-७. ††भग-४-३५. १८-२०.

इति अद्वैतात्मज्ञानं सम्यग्दर्शनमित्युक्तं भगवताऽपि । तस्मादात्मेत्येवेश्वरे मनो दधीत ॥

[आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ।

इति च ॥

अथ वा बहुनैतेन किं ज्ञानेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥

इति च । अविद्योपाधिपक्षेऽपि प्रमाणवादस्समस्ति—

एक एव महानात्मा सोहङ्कारोभिधीयते ।
स जीवस्सोन्तरात्मेति गीयते तत्त्वचिन्तकैः ॥

तथा श्रीविष्णुपुराणे—

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥
परात्मनो मनुष्येन्द्र विभागोऽज्ञानकल्पितः ।
क्षये तस्यात्मपरयोर्विभागोऽभाग एव हि ॥

इति । विष्णुधर्मे—

यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ।
नान्ये मलिनतां यान्ति दूरस्थाः कुत्रचित् क्वचित् ॥
तथा द्वन्द्वैरनेकैस्तु जीवे च मलिने कृते ।
एकस्मिन्नापरे जीवा मलिनास्सन्ति कुत्रचित् ॥

इति । ब्रह्मयाज्ञवल्क्ये—

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथाऽऽत्मैकोप्यनेकेषु जलाधारेष्विवांशुमान् ॥

'क्षरात्मानावीशते देव एकः' इति श्वेताश्वतरे । छान्दोग्ये—'स एकधा भवति' इत्यादि । 'स तत्र पर्येति' 'स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते' 'परो

[एतच्चिह्नमध्यगतो ग्रन्थः केषुचिदेव कोशेषु दृश्यते । व्याख्यायामनुवृत्तश्च.

विकृत एवात्मा स्वात्माऽयं जीवः' इति श्रुतेः । 'स एष इह प्रविष्टः' इति बृहदारण्यकश्रुतिः । 'आत्मेत्येवोपासीत' इति । 'तदेतद्ब्रह्मापूर्वम्' इत्यादि । 'नान्योतोस्ति द्रष्टा नान्योतोस्ति विज्ञाता' इत्यादि । 'स वा एष महानज आत्मा योयं विज्ञानमयः' इत्यादि । 'अथ योऽन्या देवतामुपास्ते,' 'एतदात्म्यमिदं सर्वम्' इति ।

**क्षेत्रज्ञं चापि मां विद्धि ।**

इति ।

**निश्चरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः ।**
**सकाशादात्मनस्तद्वत्प्रभवन्ति जगन्ति हि ॥**

योगयाज्ञवल्क्ये ।

**अजश्शरीरग्रहणात्स जात इति कीर्त्यते ।**

इति ब्राह्मे ।

**सर्पवद्रज्जुखण्डस्तु निशायां वेश्ममध्यगः ।**
**एको हि चन्द्रो द्वौ व्योम्नि तिमिराहतचक्षुषः ॥**
**आभाति परमात्मा च सर्वोपाधिषु संस्थितः ।**
**नित्योदितस्स्वयंज्योतिस्सर्वगः पुरुषः परः ॥**
**अहङ्काराविवेकेन कर्ताऽहमिति मन्यते ।**

इति ।

'एवमेवायं पुरुषः प्राज्ञेनात्मना' इति । 'सता सोम्य तदा संपन्नो भवति' ।

**स्वमायया स्वमात्मानं मोहयन् द्वैतमायया ।**
**गुणाहतं स्वमात्मानं लभते च स्वयं हरिः ॥** इति ।
**उत्क्रामन्तं स्थितं वाऽपि ।** इति ।
**अज्ञानेनावृतं ज्ञानम् ।** इति ॥
**अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम् ।** इति ॥
**आसीदिदं तमोभूतम् ।** इति ॥

'वाचारम्भणम्' इत्यादि । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् तत्केन कं जिघ्रेत्' ।

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोकः एकत्वमनुपश्यतः ॥**

'यत्र नान्यत्पश्यति नान्यत्' इत्यादि । 'भेदोयमज्ञाननिबन्धनः' इति । 'नेह नानाऽस्ति किञ्चन' । 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति । 'विश्वतश्चक्षुः' इत्यादि । 'यो योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः' इति च । 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादि । 'अजो ह्येको जुषमाणोनुशेते' 'देवात्मशक्तिं विदुः' इति । 'न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यत्पश्येत्' इत्यादि । 'एक एव रुद्रो न द्वितीयाय तस्थे' ।

**मनो विजृम्भितं चैतद्यत्किंचित्सचराचरम् ।**
**मनसो ह्यात्मनीभावे द्वैताभावात्सदाश्रयात् ॥**
**यद्द्वैतं प्रपञ्चस्य तद्भावत्वं हि चेतसः ।**
**मनोवृत्तिमयं द्वैतं अद्वैतं परमार्थतः ।**
**यथा स्वप्ने द्वयाभासं चित्तं चलति मायया ।**
**तथा जाग्रद्द्वयाभासं चित्तं चलति मायया ।**

इत्यादि गौडपादे ।

**तर्केणापि प्रपञ्चस्य मनोमात्रत्वमिष्यताम् ।**
**दृश्यत्वात्सर्वभावानां स्वप्नादिविषयो यथा ॥**
**'द्वितीयाद्वै भयं भवति' इति च ।**
**ज्ञाते त्वात्मनि नास्त्येतत् कार्यकारणताऽऽत्मनः ।**

इति च । 'एको देवस्सर्वभूतेषु गूढः' इति । 'असङ्गो ह्ययं पुरुषः' इति च ।

• विस्तारस्सर्वभूतस्य विष्णोस्सर्वमिदं जगत् ।
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ॥
सर्वत्र दैत्यास्समतामुपेत्य समत्वमाराधनमच्युतस्य ॥
सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥

'तत्त्वमसि' '[illegible] ब्रह्मास्मि' '[illegible] यदयमात्मा' 'अयमात्मा ब्रह्म' 'तरति शोकमात्मवित्' इति । 'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः' इत्यादिश्रुतिस्मृतीतिहासपुराणलौकिकेभ्यश्च ।

सिद्धेऽर्थेऽपि वेदस्य प्रामाण्यमेष्टव्यम्—

स्वपक्षस्यार्थेन[illegible]कार्यमर्थजात[illegible] चेत् ।
[illegible] परे[illegible] [illegible] वेदान्तिः परात्म[illegible] किम् ॥

इत्यभियुक्तरुक्तम् । अन्यान्वितस्वार्थे पदानां सामर्थ्यं न कार्यान्वितस्वार्थे, तथा सत्यर्थवादानामनन्वयप्रसङ्गात् अन्वयबुद्धेस्स्तुतित्वात् । न हि भवति 'वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता'* इति । रागस्यैव प्रवर्तकत्वम्, न नियोगस्य । तथा च श्रुतिः 'अथो खल्वाहुः काममय एवायं पुरुषः इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म तदभिसम्पद्यते'† । तथा च स्मृतिरपि—

अकामतः क्रिया काचिद्दृश्यते नेह कस्य चित् ।
यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम् ॥‡

इति ।

काम एष क्रोध एषः ।§ इति ।

अन्यपराणामपि मन्त्रार्थवादानां प्रामाण्यमङ्गीकर्तव्यम् । तेषामप्रामाण्यकथनेन उरगत्वं गतवान्नहुषः । तत्कथम्?—

[] एतच्चिह्नमध्यगतो ग्रन्थः केषु चिदेव कोशेषु दृश्यते.

*तै. स. २-१-१. †बृह. ६-४. ‡मनु. २-४. §भग. ३-३७.

ऋषयस्तु परिश्रान्ता वाह्यमाना दुरात्मना ।
देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः ॥
पप्रच्छुस्संशयं ते तु नहुषं पापचेतसम् ।
य इमे ब्रह्मणा प्रोक्ताः मन्त्रा वै प्रोक्षणे गवाम् ॥
एते प्रमाणं भवत उताहो नेति वासव ।
नहुषो नेति तानाह सहसा मूढचेतनः ॥

ऋषय ऊचुः—

अधर्मे संप्रवृत्तस्त्वं धर्मं च विजिघृक्षसि ।
प्रमाणमेतदस्माकं पूर्वं प्रोक्तं महर्षिभिः ॥

अगस्त्यः—

ततो विवदमानस्सन् ऋषिभिस्सह पार्थिवः ।
अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ॥
तेनाभूद्धतचेतास्स निस्श्रीकश्च शचीपते ।
ततस्तमहमुद्विग्नमवोचं भयपीडितम् ॥
यस्मात्पूर्वैः कृतं मार्गं महर्षिभिरनुष्ठितम् ।
अदुष्टं दूषयसि वै यच्च मूर्ध्न्यस्पृशः पदा ॥
यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान् दुरासदान् ।
वाहान् कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः ॥
त्वं स्वपापपरिभ्रष्टः क्षीणपुण्यो महीपते ।
दशवर्षसहस्राणि सर्परूपधरो महीम् ॥
विचरिष्यसि तीर्णश्च पुनस्स्वर्गमवाप्स्यसि ।
दृष्ट्वा युधिष्ठिरं नाम तव वंशसमुद्भवम् ॥*

इति श्रीमहाभारते । अतः श्रद्धेयमात्मज्ञानम् ।

अश्रद्दधानाः पुरुषाः धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥†

इति श्रीभगवद्वचनात् । ऐतरेयके च 'एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यं तस्मान्न प्रमाद्येत्तन्नातीयान्न ह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवुः' । तदुक्तमृषिणा—

---

*उद्योग. १७.

†भगव. ९-३.

**प्रजा ह तिस्रो अत्यायमीयुर्न्यन्या अर्कमभितो विविश्रे।**
**बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेश * ॥**

इति । 'प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजाः तिस्रोत्यायमीयुस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः'† इति श्रुतम् । वङ्गा वनगाः वृक्षाः । वगधाः ओषधयश्च । इरपादा उरःपादाः सर्पादयः । तथाचेशावास्ये अविद्वन्निन्दार्थो मन्त्रः—

**असुर्या नाम ते लोका अन्धेन तमसा वृताः ।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥**

इति । 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्'‡ इति तैत्तिरीये । तथा शकुन्तलोपाख्याने—

**योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।**
**किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥§**

इत्यलमतिप्रसङ्गेन ।

सहस्रनामजपस्य अनुरूपं मानसस्नानमुच्यते—

**यस्मिन् देवाश्च वेदाश्च पवित्रं कृत्स्नमेकताम् ।**
**व्रजेत्तन्मानसं तीर्थं तत्र स्नात्वाऽमृतो भवेत् ॥**
**ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे ।**
**यःस्नाति मानसे तीर्थे स याति परमां गतिम् ।**
**आत्मा नदी संयमतोयपूर्णा**
**सत्यह्रदा शीलतटा दयोर्मिः ।**
**तत्रावगाहं कुरु पाण्डुपुत्र**
**न वारिणा शुद्ध्यति चान्तरात्मा ॥**

इति महाभारते ।

**मानसं स्नानं विष्णुचिन्तनम् ।**

इति विष्णुस्मृतौ ।

**जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥¶**

---

*ऋक्स. ६-७-८, †आरण्यके. २-१-१, ‡तै.उ.२-६. §आदिप.७४. ¶२-८७.

इति मानवं वचनम् ।

जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते ।
अहिंसया च भूतानां जपयज्ञः प्रवर्तते ॥ इति ।
यज्ञानां जपयज्ञोऽस्मि ।*

इति श्रीगीतासु ।

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यस्स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरश्शुचिः ॥

इत्यादि ॥ १० ॥

यदेकं दैवतं प्रस्तुतं तस्योपलक्षणमच्यते—

**यतस्सर्वाणि भूतानि भवन्त्यादियुगागमे ।**
**यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥**

**यतः** यस्मात् **सर्वाणि** भूतानि भवन्ति उद्भवन्ति **आदि-युगागमे । यस्मिंश्च** प्रलयं विनाशं यान्ति पुनः भूयः 'एव' इत्यवधारणार्थं । नान्यस्मिन्नित्यर्थः । युगक्षये महाप्रलये । मध्येऽपि यस्मिन् तिष्ठन्ति, 'यतो वा इमानि भूतानि जायन्ते'† इति श्रुतेः ॥११॥

**तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।**
**विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२ ॥**

**तस्य** एवंलक्षणलक्षितस्य एकस्य दैवतस्य **लोकप्रधानस्य** लोकनहेतुभिः विद्यास्थानैः प्रतिपाद्यमानस्य **जगन्नाथस्य**‡ **भूपते!** महीपाल! **विष्णोः** व्यापनशीलस्य **नामसहस्रं** नाम्नां सहस्रं पापं भयं चापहन्तीति **पापभयापहं** त्वं **मे** मम मत्तः **शृणु** एकाग्रमनाः भूत्वा अवधारय ॥

*१०-२५. †तै उ. ३-१

‡जगतां नाथस्स्वामी मायाशबलः परमात्मा निर्लेपश्च तस्य इत्यधिकम् दाक्षिणात्यकोशेषु.

> एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम ।
> नाम्नां चतुर्णां लोकानामुपकारकरं शृणु ॥
> निमित्तशक्त्या नाम्नां भेदिन्यस्तदुदीरणात् ।
> भिन्नसामर्थ्येन साधयन्ते फलानि द्विजसत्तम ॥
> यच्छक्ति नाम यत्तस्य तस्मिन्नेव च वस्तुनि ।
> साधकं पुरुषव्याघ्र सौम्यक्रूरेषु वस्तुषु ॥

इति विष्णुधर्मे ।

यद्यपि परस्य ब्रह्मणः षष्ठीगुणक्रियाजातिरूढीनां शब्दप्रवृत्तिहेतुभूतानां निमित्तशक्तीनां चासम्भवः । तथाऽपि सगुणे ब्रह्मणि सविकारे सर्वात्मकत्वात् तेषां शब्दप्रवृत्तिहेतूनां संभवात् सर्वे शब्दाः परस्मिन् पुंसि वर्तन्ते ॥ १२ ॥

तत्र—

**यानि नामानि गौणानि विख्यातानि महात्मनः ।**
**ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥**

यानि नामानि गौणानि गुणसंबन्धीनि गुणयोगात् प्रवृत्तानि तेषु नामसु विख्यातानि प्रसिद्धानि ऋषिभिः मन्त्रैः तद्दर्शिभिश्च परिगीतानि परितः सर्वतः परमेश्वराख्यानेषु तत्र-तत्र गीतानि । महांश्चासावात्मा चेति महात्मा—

> यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
> यच्चास्य सन्ततो भावः तस्मादात्मेति कीर्त्यते ॥

इति वचनात् । अयमेव महानात्मेति महात्मा । तस्याचिन्त्यप्रभावस्य तानि वक्ष्यामि भूतये पुरुषार्थचतुष्टयसिद्धये पुरुषार्थचतुष्टयार्थिनामिति ॥

• अत्र नामसहस्रे आदित्यादिशब्दानां अर्थान्तरे प्रसिद्धानां

* ४१.१०-१२.

आदित्याद्यर्थाना तद्विभूतित्वेन तदभेदात् तस्यैव स्तुतिरिति प्रसिद्धार्थग्रहणेऽपि तत्स्तुतित्वम् ।

**भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।**
**आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥**
**ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।**
**नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥***

इति विष्णुपुराणे । 'आदित्यानामहं विष्णुः' इत्यारभ्य 'एकांशेन स्थितो जगत्'† इति पर्यन्तं गीतासु ।

**पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।‡**

इत्यादिश्रुतिश्च । विष्ण्वादिशब्दानां पुनरुक्तानामपि वृत्तिभेदेनार्थभेदात् न पौनरुक्त्यम् । 'श्रीपतिर्माधवः' इत्यादीना वृत्त्येकत्वेऽपि शब्दभेदान्न पौनरुक्त्यम् । अर्थैकत्वेऽपि न पौनरुक्त्यं दोषाय, 'नाम्नां सहस्रस्य किमेकं दैवतम्' इति पृष्टेः एकदेवताविषयत्वात् ॥

यत्र पुल्लिङ्गशब्दप्रयोगस्तत्र विष्णुर्विशेष्यः । यत्र स्त्रीलिङ्गशब्दः तत्र देवता विशेष्यते । यत्र नपुंसकलिङ्गशब्दः तत्र ब्रह्मेति विशेष्यते ॥१३॥

'यतस्सर्वाणि भूतानि' इत्यारभ्य जगदुत्पत्तिस्थितिलयकारणस्य ब्रह्मण एकदेवतात्वेनाभिहितत्वादादावुभयविधं ब्रह्म विश्वशब्देनोच्यते—

## विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
## भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १४ ॥

विश्वस्य जगतः कारणत्वेन विश्वं इत्युच्यते ब्रह्म । आदौ तु विश्वमिति कार्यभूतविश्वशब्देन कारणग्रहणं कार्यभूतविरिञ्च्यादिनामभिरपि उपपन्ना स्तुतिर्विष्णोः इति दर्शयितुम् ॥

*२-१२. † १०-४२. ‡मुण्डको. २-१.

यद्वा—परस्मात् पुरुषात् न भिन्नमिदं विश्वं परमार्थतः तेन विश्वमित्यभिधीयते ब्रह्म । 'ब्रह्मैवेदं विश्वं'* 'पुरुष एवेदं विश्वं'* 'विश्वमेवेदम्'† इत्यादिश्रुतिभ्यः । तद्भिन्नं न किंचित् परमार्थतः सदस्ति ॥

अथ वा—विशतीति विश्वं ब्रह्म, 'तत्सृष्ट्वा । तदेवानुप्राविशत्'‡ इति श्रुतेः । किंच—संहृतौ विशन्ति विश्वानि भूतानि अस्मिन्निति विश्वं ब्रह्म, 'यत् प्रयन्त्यभिसंविशन्ति'‡ इति श्रुतेः । तथा हि—सकलं जगत्कार्यभूतमेव विशति, अत्र अखिलं विश्वं विशतीत्युभयथाऽपि विश्वं ब्रह्म इति, श्रुतेः ॥

'अन्यत्र धर्मादन्यत्राधर्मात्'

इत्यारभ्य

**सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि । ओमित्येतत् ॥**
**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् । इति ॥§**

'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः' इत्युपक्रम्य '**यः** पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत'¶ इति । 'ओमिति ब्रह्म । ओमितीदं सर्वम् ।'** 'तद्यथा शंकुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक् संतृण्णा । ओङ्कार एवेदं सर्वम् ।'†† 'ओमित्येतदक्षरम्' इत्युपक्रम्य

**प्रणवो ह्यपरं ब्रह्म प्रणवश्च परस्स्मृतः ।**
**अपूर्वोऽनन्तरो बाह्यो न परः प्रणवोऽव्ययः ॥**

---

*मुण्डको. २-१-१०. २-२-११ † याज्ञिक्यु. १३. ‡ तै. उ. २-६, ३-१.
§कठो. १-२. ¶ प्रश्नो. ५. ** तै. उ. १-८. †† छान्दो. २-२३.

सर्वस्य प्रणवो ह्यादिः मध्यमन्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥
प्रणवं हीश्वरं विन्द्यात् सर्वस्य हृदये स्थितम् ।
सर्वव्यापिनमोङ्कारं ज्ञात्वा धीरो न शोचति ॥
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमश्शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥ इति ॥*

'ओं तद्ब्रह्म । ओं तद्वायुः । ओं तदात्मा । ओं तत्सत्यम् ।'†
इत्यादिभ्यः श्रुतिभ्यः ।

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥‡
रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।
प्रणवस्सर्ववेदेषु .. ॥
... .... गिरामस्म्येकमक्षरम् ॥
आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता ।
एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ॥

'ओङ्कारस्स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत । विकथा चान्या कृत्वा एव लौकिकया वाचा व्यावर्तते ब्रह्म' ।§

प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः ।
वाङ्मयं प्रणवं सर्वं तस्मात्प्रणवमभ्यसेत् ॥

इत्यादिस्मृतिभ्यश्च विश्वशब्देन ओंकारोऽभिधीयते । वाच्यवाचकयोरत्यन्तभेदाभावात् विश्वमित्योंकार एव ब्रह्मेत्यर्थः । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत'¶ इति । एतदुक्तं भवति—यस्मात्सर्वमिदं विकारजातं ब्रह्म तज्जत्वात् तल्लत्वात् तदनत्वाच्च । न च सर्वस्यैकात्मत्वे रागादयस्सम्भवन्ति । तस्माच्छान्त उपासीत इति श्रुतेः,

---

* गौडपा. १. † तै. उ. ४-६८. ‡ भगव. ८-१३, ७-८, १०-२५.
§ आप. ध. १-१३. ¶ छान्दो. ३-१४.

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥*
निर्गुणः परमात्माऽत्र देहं व्याप्य व्यवस्थितः ।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥
यद्यागमैर्न विज्ञेयं तमहं भूतभावनम् ।
क्रमेयं त्वां गिरिं चेमं हनूमानिव सागरम् ॥†
बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः ।
शोच्यान्यहोतिमोहेन व्याप्तानीति मनीषिणाम् ।
एते भिन्नदृशां दैत्या विकल्पाः कथिता मया ॥
कृत्वाऽभ्युपगमं तत्र संक्षेपश्श्रूयतां मम ।
विस्तारस्सर्वभूतस्य विष्णोस्सर्वमिदं जगत् ॥
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ।
समुत्सृज्यासुरं भावं तस्माद्यूयं तथा वयम् ॥
तथा यत्नं करिष्यामो यथा प्राप्स्याम निर्वृतिम् ।
सर्वत्र दैत्यास्समतामुपेताः समत्वमाराधनमच्युतस्य ॥‡
न मन्त्रादिकृतस्तात न च नैसर्गिको मम ।
प्रभाव एष सामान्यो यस्ययस्याच्युतो हृदि ॥
अन्येषां यो न पापानि चिन्तयत्यात्मनो यथा ।
तस्य पापागमस्तात हेत्वभावान्न विद्यते ॥
कर्मणा मनसा वाचा परपीडां करोति यः ।
तद्बीजं जन्म फलति प्रभूतं तस्य चाशुभम् ॥
सोहं न पापमिच्छामि न करोमि वदामि वा ।
चिन्तयन्सर्वभूतस्थमात्मन्यपि च केशवम् ॥
शारीरं मानसं वाग्जं दैवं भूतभवं तथा ।
सर्वत्र समचित्तस्य तस्य मे जायते कुतः ॥
एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी ।
कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम् ॥
साम चोपप्रदानं च भेददण्डौ तथाऽपरौ ।

---

*भग. ६-३२. †अरण्य. प. १४७. ‡विष्णुपु. १-१७.

उपायाः कथिता ह्येते मित्रादीनां च साधने ॥
तानेवाहं न पश्यामि मित्रादींस्तात मा क्रुध ।
साध्याभावे महाबाहो साधनैः किं प्रयोजनम् ॥
सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥
जडानामविवेकानामशूराणामपि प्रभो ।
भाग्यभोग्यानि राज्यानि सन्त्यनीतिमतामपि ॥
तस्माद्यतेत पुण्येषु य इच्छेन्महतीं श्रियम् ।
यतितव्यं समत्वेन निर्वाणमपि चेच्छता ॥
देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥
एतद्विजानता सर्वं जगत् स्थावरजङ्गमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक् ॥
एवं ज्ञाते स भगवाननादिः परमेश्वरः ।
प्रसीदत्यच्युतो यस्मिन्प्रसन्ने क्लेशसंक्षयः ॥*
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥†

इत्यादिवचनैश्च हिमादिरहितेन स्तुतिनमस्कारादि कर्तव्यमिति द-र्शयितुं विश्वशब्देन ब्रह्माभिधीयत इति वा ॥

मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः ।
निर्वैरस्सर्वभूतेषु यस्स मामेति पाण्डव ॥‡

इति ।

न चलति निजवर्णधर्मतो यस्सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चिदुच्चैस्सितमनसं तमवेहि विष्णु-
(भक्तम् ॥
विमलमतिरमत्सरः प्रशान्तश्शुभचरितोऽखिलसत्त्वमित्रभूतः ।
प्रियहितवचनोऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥

*विष्णुपु. ३-१९. †भग. ७-१९. ‡भग. ११-५५.

वसति हृदि सनातने च तस्मिन्भवति पुमाञ्जगतोस्य सौम्यरूपः ।
क्षितिरसमतिरम्यमात्मनोन्तः कथयति चारुतयैव सालपोतः ॥
सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरस्स एकः ।
इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥
यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् ।
अपगतमदमानमत्सराणां व्रज भट दूरतरेण मानवानाम् ॥*

इत्यादिवचनैर्वैष्णवलक्षणस्य एवंप्रकारत्वाच्च हिंसादिरहितेन विष्णोः स्तुतिनमस्कारादि कर्तव्यमिति ।

'श्रद्धया देयम् । अश्रद्धयाऽदेयम्'† 'श्रद्धयाऽग्निस्समिध्यते'‡ इति श्रुतेः,

अश्रोत्रियं श्राद्धमधीतमव्रतं
अदक्षिणं यज्ञमनृत्विजा हुतम् ।
अश्रद्धया दत्तमसंस्कृतं हविः
भागाष्षडेते तव दैत्यसत्तम ॥

पुण्यं महेषिणां यच्च मद्धकद्वेषिणां तथा ।
क्रयविक्रयसक्तानां पुण्यं यच्चाग्निहोत्रिणाम् ॥
अश्रद्धया च यद्दानं यजतां ददतां तथा ।
तत्सर्वं तव दैत्येन्द्र मत्प्रसादाद्भविष्यति ॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥§

इत्यादिस्मृतिभ्यश्च श्रद्धया स्तुतिनमस्कारादि कर्तव्यं, नाश्रद्धया ।

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः ।¶

इति भगवद्वचनात् स्तुतिनमस्कारादिकं कर्मासात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति । आत्मानं विष्णु ध्यात्वा स्तुतिनमस्कारादि कर्तव्यम् ।

*विष्णुपु., ३-७. †तै. उ. १-११. ‡तै. ब्रा. २-८-८.
§भग. १७-२८. ¶भग. १७-२३.

नाविष्णुः कीर्तयेद्विष्णुं नाविष्णुर्विष्णुमर्चयेत् ।
नाविष्णुस्संस्मरेद्विष्णुं नाविष्णुर्विष्णुमाप्नुयात् ॥

इति महाभारते कर्मकाण्डे ।

सर्वाण्येतानि नामानि परस्य ब्रह्मणोनघ ।
एवमेतानि नामानि देवदेवस्य कीर्तयन् ॥
यं यं काममभिध्यायेत्तं तमाप्नोत्यसंशयम् ।
सर्वान्कामानवाप्नोति समाराध्य जगद्गुरुम् ॥
तन्मयत्वेन गोविन्दमित्येतद्दाल्भ्य नान्यथा ।
तन्मयो वाञ्छितान्कामान्पदमाप्नोति मानवः ॥*

इति विष्णुधर्मे ।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोपि स योगी मयि वर्तते ॥†

इति भगवद्गीतायाम् ।

अहं हरिस्सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ॥‡

इति विष्णुपुराणे ।

गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोन्यतः ॥§

'तस्माद्ब्रह्मैवाचार्यरूपेणावतिष्ठते'

इति व्यासस्मृतेः ।

वरं हुतवहज्वालापुञ्जस्यान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥

इति कात्यायनवचनात् यत्र देशे वासुदेवनिन्दा तत्र वासो न कर्तव्यः । एतदुक्तं भवति—

---

*४१. †भगव. ६-३१. ‡१-२२. §मनु. २-२००.

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥***

इति श्वेताश्वतरोपनिषन्मन्त्रवर्णात् हरौ गुरौ च परा भक्तिः कार्येति॥

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव॥†
ज्ञानतोऽज्ञानतो वाऽपि वासुदेवस्य कीर्तनात्।
तत्सर्वं विलयं याति तोयस्थं लवणं यथा॥
कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम्।
प्रयाति विलयं सद्यः सकृद्यत्रानु संस्मृते॥†
सकृत् स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम्।
पापराशिं दहत्याशु तूलराशिमिवानलः॥
(सेयं वदनवल्मीकवासिनी रसनोरगी।
या न गोविन्द गोविन्द गोविन्देति प्रभाषते॥
पापवल्ली मुखे तस्य जिह्वारूपेण तिष्ठति।
या न वक्ति दिवारात्रौ गुणान्गोविन्दसम्भवान्॥)
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति॥
एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय॥

इत्यादिवचनैः श्रद्धाभक्त्योरभावेऽपि नामसंकीर्तनं समस्तं दुरितं नाशयतीत्युक्तम्। किमुत श्रद्धादिपूर्वकं सहस्रनामसंकीर्तनं नाशयतीति।

'मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति,' 'यद्धि मनसा ध्यायति तद्वाचा वदति'‡ इति श्रुतिभ्यां स्मरणं ध्यानं च नामसंकीर्तनेऽन्तर्भूतम्।

**यस्मिन्नयस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने**
**विघ्नो यत्र निवेशिते च मनसि ब्राह्मोऽपि लोकोऽल्पकः।**

* श्वे. उ. ६-२३. † विष्णुपु. ६-८. ‡ तै. सं. ६-१-७.

**मुक्तिं चेतसि यस्स्थितोमलधियां पुंसां ददात्यव्ययः**
**किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥**

इति विष्णुपुराणे श्रीपराशरेणोपसंहृतम् ।

**आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।**
**इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥**

इति महाभारतान्ते भगवता श्रीवेदव्यासेनोपसंहृतम् ।

**हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितैः ।**
**ओमित्येवं सदा विप्राः पठत ध्यात केशवम् ॥**

इति हरिवंशे कैलासयात्रायां हरिरेको ध्यातव्य इत्युक्तं श्रीमहेश्वरेणापि । एतत्सर्वमभिप्रेत्य—

**एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।**

इत्याधिक्यमुक्तम् ।

'**किमेकं दैवतम्**' इत्यारभ्य '**किं जपन्मुच्यते जन्तुः**' इति षट्प्रश्नेषु '**यतस्सर्वाणि**' इति प्रश्नोत्तराभ्यां यद्ब्रह्मोक्तं तद्विश्वशब्देनोच्यत इति व्याख्यातम् । तत्किमित्याकाङ्क्षायामाह—विष्णुः इति । तथा च ऋग्वेदे—

**आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ।***

इत्यादिवाक्यैर्विष्णोः नामसंकीर्तनेन सम्यग्ज्ञानप्राप्तिर्विहिता । वेवेष्टि व्याप्नोतीति विष्णुः । विषेर्व्याप्त्यभिधायिनो नुक्प्रत्ययान्तस्य रूपम् । देशकालवस्तुपरिच्छेदशून्य इत्यर्थः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः'† इत्यादिश्रुतेः । विशतेर्वा नुक्प्रत्ययस्य रूपं विष्णुरिति ।

**यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः ।**
**तस्माद्विष्णुरिति ख्यातो विशेर्धातोः प्रवेशनात् ॥**

---

* ऋक्स १-१५६-३.    † तै. उ. ४-१३.

इति विष्णुपुराणे ।*

व्याप्ते मे रोदसी पार्थ कान्तिश्चाप्यधिका स्थिता ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः ॥†

इति महाभारते । यदुद्देशेनाध्वरे वषट्क्रियते स **वषट्कारः** । यस्मिन् यज्ञे वा वषट्क्रिया, 'यज्ञो वै विष्णुः'‡ इति श्रुतेः । येन वषट्कारादिमन्त्रात्मना वा देवान् प्रीणयति स वषट्कारः। देवता वा, 'प्रजापतिश्च वषट्कारश्च' इति श्रुतेः ।

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥§

इत्यादिस्मृतेश्च । **भूतभव्यभवत्प्रभुः** भूतं भव्यं भवच्चेति भूतभव्यभवन्ति तेषां प्रभुः । कालभेदमनादृत्य सन्मात्रप्रतियोगिकमैश्वर्यं तस्येति प्रभुत्वम् । रजोगुणं समाश्रित्य विरिञ्चिरूपेण भूतानि करोतीति **भूतकृत्** । तमोगुणमास्थाय स रुद्रात्मना भूतानि कृन्तति कृणोति हिनस्तीति **भूतकृत्** । सत्त्वं गुणमधिष्ठाय भूतानि बिभर्ति धारयति पोषयतीति वा **भूतभृत्** । प्रपञ्चरूपेण भवतीति, केवलं भवतीत्येव वा **भावः** । भवनं भावः सत्तात्मको वा । **भूतात्मा** भूतानामात्मा अन्तर्यामी, 'एष त आत्मा अन्तर्याम्यमृतः'¶ इति श्रुतेः । भूतानि भावयति जनयति वर्धयतीति वा **भूतभावनः** ॥१४॥

भूतकृदित्यादिभिः गुणतन्त्रत्वं प्राप्तं प्रतिषिध्यते-

**पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।**
**अव्ययः पुरुषस्साक्षी क्षेत्रज्ञोऽक्षर एव च ॥१५॥**

---

*३-१. †शान्तिप. ३४२. ‡ तै. स. १-७-४.
§विष्णुस्मृ. ३५ श्लो. ¶बृह. ५-७-४.

पूत आत्मा यस्य सः पूतात्मा, 'केवलो निर्गुणश्च'* इति श्रुतेः। गुणोपरागश्चेच्छातः स्वात्मनो न कल्प्यते। परमश्चासावात्मा चेति परमात्मा कार्यकारणविलक्षणो नित्यशुद्धबुद्धमुक्तस्वभावः। मुक्तानां परमा प्रकृष्टा गतिर्गन्तव्या देवता पुनरावृत्त्यसम्भवात्तद्गतस्येति मुक्तानां परमा गतिः।

मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते।†

इति भगवद्वचनम्। नास्य व्ययो विनाशो विकारो वा विद्यत इति अव्ययः। 'अजरोऽमरोऽव्यय' इति श्रुतेः‡। पुरं शरीरं, तस्मिन् शेते इति पुरुषः।

नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम्।
व्याप्य शेते महात्मा यस्तस्मात्पुरुष उच्यते॥

इति महाभारते। यद्वा—[illegible] आसीत्पुरा पूर्वमेवेति विग्रहं कृत्वा व्युत्पादितः पुरुषः 'पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुषत्वम्' इति श्रुतेः§। अथवा—पुरुषु उत्कर्षशालिषु सीदतीति, पुरूणि फलानि सनोति ददातीति वा, पुरूणि भुवनानि संहारसमये स्यति अन्तं करोतीति वा, पूरणात्सदनाद्वा पुरुषः।

पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः।¶

इति पञ्चमवेदे। साक्षादव्यवधानेन स्वरूपबोधेन ईक्षते पश्यति सर्वमिति साक्षी। 'साक्षाद्द्रष्टरि संज्ञायाम्' इति पाणिनिवचनादिनिप्रत्ययः। क्षेत्रं शरीरं जानातीति क्षेत्रज्ञः 'आतोऽनुपसर्गे कः' इति कप्रत्ययः।

---

*श्वेता. ६-११. †भग. ८-१६. ‡बृ.उ. ६-४-२५.
§तै. आ. १-२३. ¶उद्योगप. ७०-११.

क्षेत्रज्ञं चापि मां विद्धि......... ।*

इति भगवद्वचनात् ।

स एव न क्षरतीति अक्षरः परमात्मा । अश्नोतेर्वा सर-प्रत्ययान्तस्य रूपमक्षर इति । [illegible] क्षेत्रज्ञाक्षरयोरभेदः परमार्थतः, 'तत्त्वमसि' इति श्रुतेः । संसाराद्व्यावहारिको भेदश्च, प्रसिद्धेरप्रमाणत्वात् ॥ १५ ॥

**योगो योगविदां नेता प्रधानपुरुषेश्वरः ।**
**नारसिंहवपुश्श्रीमान् केशवः पुरुषोत्तमः ॥१६॥**

'ज्ञानेन्द्रियाणि सर्वाणि निगृह्य मनसा सह ।
एकत्वभावना योगः क्षेत्रज्ञपरमात्मनो ॥

तदवाप्यतया योगः । योगं विदन्ति विचारयन्ति, जानन्ति, लभन्त इति वा योगविदः । तेषां नेता ज्ञानिनां योगक्षेमवहनादिनेति **योगविदां नेता,**

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।*

इति भगवद्वचनात् । प्रधानं प्रकृतिर्माया, पुरुषो जीवः; तयो-रीश्वरः **प्रधानपुरुषेश्वरः** । नरस्य सिंहस्य चावयवा यस्मिन् लक्ष्यन्ते तद्वपुर्यस्य स **नारसिंहवपुः** । यस्य वक्षसि नित्यं वसति श्रीः स **श्रीमान्** । अभिरूपाः केशा यस्य स के-शवः । 'केशाद्वोऽन्यतरस्याम्' इति वप्रत्ययः प्रशंसायाम् । यद्वा—कश्च अश्च ईशश्च त्रिमूर्तयः केशाः; ते यद्वशे वर्तन्ते स **केशवः** । केशिवधाद्वा—

यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दन ।
तस्मात्केशवनाम्ना त्वं लोके ख्यातिं गमिष्यसि ॥†

---

*भ. गी. १३-२. ९-२२.

†५-१६-२३.

इति विष्णुपुराणे श्रीकृष्णं प्रति नारदवचनम् । पृषोदरादित्वाच्छब्दसाधुत्वकल्पना । पुरुषाणामुत्तमः **पुरुषोत्तमः** । अत्र 'न निर्धारणे' इति षष्ठीसमासप्रतिषेधो न भवति, जात्याद्यनपेक्षया समर्थत्वात् । यत्र पुनः जातिगुणक्रियापेक्षया पृथक्क्रिया तत्रासमर्थत्वान्निषेधः प्रवर्तते ; यथा—मनुष्याणां क्षत्रियः शूरतमः, गवां कृष्णा संपन्नक्षीरतमा, अध्वगानां धावन् शीघ्रतम इति । अथ वा पञ्चमीसमासः । तथा च भगवद्वचनम्—

**यस्मात् क्षरमतीतोहं अक्षरादपि चोत्तमः ।**
**अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥***

इति ॥ १६ ॥

## सर्वश्शर्वश्शिवस्स्थाणुर्भूतादिर्निधिरव्ययः ।
## सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥१७॥

**असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।**
**सर्वस्य सर्वदा ज्ञानात् सर्वमेनं प्रचक्षते ॥+**

इति भगवद्व्यासवचनात् **सर्वः** । शृणाति संहारसमये संहरति संहारयति सकलाः प्रजा इति **शर्वः** निस्त्रैगुण्यतया शुद्धत्वात् **शिवः** । 'स ब्रह्म स शिवः'‡ इत्यभेदोपदेशात् शिवादिनामभिः हरिरेव स्तूयते । स्थिरत्वात् **स्थाणुः** । भूतानामादिकारणत्वात् **भूतादिः** । प्रलयकाले अस्मिन् सर्वं निधीयते इति **निधिः** । 'कर्मण्यधिकरणे च' इति किप्रत्ययः । स एव निधिर्विशेष्यते—**अव्ययः** अनश्वरो निधिरित्यर्थः । स्वेच्छया समीचीनं भवनमस्येति **सम्भवः**,

**धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे ॥***

*भग. १५-१८, ४-८. +उद्योगप. ७०-१२. ‡याज्ञिक्यु. १३.

इति भगवद्वचनात् ॥

**अथ दुष्टविनाशाय साधूनां रक्षणाय च ।**
**स्वेच्छया सम्भवाम्येवं गर्भदुःखविवर्जितः ॥**

इति च । सर्वेषां भोक्तॄणां फलानि भावयतीति **भावनः** । सर्वफलदातृत्वं 'फलमत उपपत्तेः'* इत्यत्र उपपादितम् । प्रपञ्चस्याधिष्ठानत्वेन भरणात् **भर्ता** । प्रकर्षेण महाभूतानि अस्माज्जायन्त इति **प्रभवः**, प्रकृष्टो भवो जन्मास्येति वा । सर्वासु क्रियासु सामर्थ्यातिशयात् **प्रभुः** । निरुपाधिकमैश्वर्यमस्येति **ईश्वरः** । 'एष सर्वेश्वरः'† इति श्रुतेः ॥

## स्वयम्भूश्शम्भुरादित्यः पुष्कराक्षो महास्वनः । अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ १८ ॥

स्वयमेव भवतीति स्वयम्भूः ।

**.... ...स एव स्वयमुद्बभौ ॥‡**

इति मानवं वचनम् । सर्वेषामुपरि भवति स्वयं भवतीति वा **स्वयम्भूः** । येषामुपरि भवति यश्चोपरि भवति तदुभयात्मना स्वयमेव भवतीति वा, 'परिभूस्स्वयम्भूः'§ इति मन्त्रवर्णात् । अथवा—स्वयम्भूः परमेश्वरः स्वयमेव स्वतन्त्रो भवति न परतन्त्रः, 'पराञ्चि खानि व्यतृणत्स्वयंभूः'¶ इति मन्त्रवर्णात् । शं सुखं भक्तानां भावयतीति **शम्भुः** । आदित्यमण्डलान्तस्थो हिरण्मयः पुरुषः **आदित्यः** । द्वादशादित्येषु विष्णुर्वा

**आदित्यानामहं विष्णुः......... ।****

इत्युक्तः । अदितेरखण्डिताया मह्या अयं पतिरिति वा, 'इयं

---

*ब्रह्मसू. ३-२-३८. †बृह. ६-४-२२. ‡१-७.
§ईशो ८. ¶कठ. २-१-१. **भगव. १०-२१.

वा अदितिः'* 'महीं देवीं विष्णुपत्नीम्'† इति श्रुतेः। आदित्य एक एवानेकेषु जलभाजनेषु अनेकवत्प्रतिभासते, एवमनेकेषु शरीरेषु एक एव आत्मा अनेकवत्प्रतिभासत इति आदित्यसाधर्म्याद्वा **आदित्यः**। पुष्करेणोपमिते अक्षिणी यस्येति **पुष्कराक्षः**। महान्पूजित स्वनो नादो वा श्रुतिलक्षणो यस्य स **महास्वनः**। 'सन्महत्' इत्यादिना समासे कृते 'आन्महतस्समानाधिकरणजातीययोः' इत्यादिना आत्वम्। 'अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः'‡ इति श्रुतेः। आदिर्जन्म; निधनं विनाशः, तद्द्वयं यस्य न विद्यते सः **अनादिनिधनः**। अनन्तादिरूपेण विश्वं बिभर्तीति **धाता**। कर्मणां तत्फलानां च कर्ता **विधाता**। अनन्तादीनामपि धारकत्वाद्विशेषेण दधातीति वा। **धातुरुत्तम** इति नामैकं सविशेषणं सामानाधिकरण्येन। सर्वधातुभ्यः पृथिव्यादिभ्यः उत्कृष्टश्चिद्धातुरित्यर्थः। धातुर्विरिञ्चादुत्कृष्ट इति वा वैयधिकरण्येन। नामद्वयं वा, कार्यकारणप्रपञ्चधारणाच्चिदेव धातुः। उत्तमः सर्वेषामुद्गतानां अतिशयेनोद्गतत्वादुत्तमः ॥१८॥

## अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः।
## विश्वकर्मा मनुस्त्वष्टा स्थविष्ठस्स्थविरो ध्रुवः॥१९॥

शब्दादिरहितत्वान्न प्रत्यक्षगम्यः। नाप्यनुमानगम्यः, तद्व्याप्तलिङ्गाभावात्। नाप्युपमानसिद्धः, निर्भागत्वेन सादृश्याभावात्। नाप्यर्थापत्तिग्राह्यः, तद्विनानुपपद्यमानस्यासम्भवात्। नाप्यभावगोचरः, भावरूपत्वात्, अभावसाक्षित्वाच्च। नापि शास्त्रप्रमाणवेद्यः, प्रमाणजन्यातिशयाभावात्। यद्येवं शास्त्रयोनित्वं कथं? उच्यते—

---

* तै. स. ५-१-७. † तै. आ. ३-१-२. ‡ बृह. ४-४-१०.

प्रमाणादिसाक्षित्वेन प्रकाशस्वरूपस्य प्रमाणाविषयत्वेऽपि अध्यस्तातद्भावनिवर्तकत्वेन शास्त्रप्रमाणकत्वमिति **अप्रमेयः**, साक्षिरूपत्वात् । हृषीकाणि इन्द्रियाणि; तेषामीशः क्षेत्रज्ञरूपभाक् । यद्वा—इन्द्रियाणि यस्य वशे वर्तन्ते स परमात्मा **हृषीकेशः** । यस्य वा सूर्यरूपस्य चन्द्ररूपस्य च जगत्प्रीतिकरा **हृष्टाः** केशा रश्मयः स **हृषीकेशः** । पृषोदरादित्वात्साधुत्वम् । यथोक्तं मोक्षधर्मे—

> सूर्याचन्द्रमसौ शश्वदंशुभिः केशसंज्ञितैः ।
> बोधयन् स्वापयंश्चैव जगदुत्तिष्ठते पृथक् ॥
> बोधनात् स्वापनाच्चैव जगतो हर्षणं भवेत् ।
> अग्नीषोमकृतैरेवं कर्मभिः पाण्डुनन्दन ॥
> हृषीकेशोऽहमीशानो वरदो लोकभावनः ॥*

इति । सर्वजगत्कारणं पद्मं नाभौ यस्य स **पद्मनाभः** । 'अजस्य नाभावध्येकमर्पितम्'† इति श्रुतेः । अमराणां प्रभुः **अमरप्रभुः** । विश्वं कर्म क्रिया यस्य स **विश्वकर्मा** । क्रियते इति जगत् कर्म विश्वं कर्म यस्येति वा । विचित्रनिर्माणशक्तिमत्त्वाद्वा विश्वकर्मा । त्वष्टा साहश्याद्वा । मननात् **मनुः**, 'नान्योऽतोऽस्ति मन्ता'‡ इति श्रुतेः । मन्त्रो वा. प्रजापतिर्वा **मनुः** । संहारसमये सर्वभूततनूकरणात्वात् **त्वष्टा** । त्वक्षतेस्तनूकरणार्थात् तृच्प्रत्ययः । अतिशयेन स्थूलः **स्थविष्ठः** । पुराणः **स्थविरः** 'त्वेषं ह्यस्य स्थविरस्य नाम'§ इति बह्वृचाः । वयोवचनो वा । स्थिरत्वात् ध्रुवः । **स्थविरो ध्रुव** इत्येकं नाम सविशेषणम् ॥ १९ ॥

**अग्राह्यश्शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।**
**प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥ २० ॥**

---

*शान्तिप. ३४३. †तै. स. ४-६-२. ‡बृ. ५-७-२३. §ऋक्सं. ७-१००-३.

**कर्मेन्द्रियैः** न गृह्यत इति **अग्राह्यः** । 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह '* इति श्रुतेः । शश्वत् सर्वेषु कालेषु भवतीति **शाश्वतः**, 'शाश्वत शिवमच्युतम्'† इति श्रुतेः । सच्चिदानन्दात्मकः **कृष्णः**—

**कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः ।**
**विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥‡**

इति व्यासवचनात् । कृष्णवर्णात्मकत्वाद्वा—

**कृष्णो वर्णश्च मे यस्मात् तस्मात्कृष्णोहमर्जुन ॥§**

इति महाभारते । लोहिते अक्षिणी यस्येति **लोहिताक्षः** । 'स मा वृषभो लोहिताक्षः '¶ इति श्रुतेः । प्रलये भूतानि प्रतर्दयति हिनस्तीति **प्रतर्दनः** । ज्ञानैश्वर्यादिगुणैः सम्पन्नः **प्रभूतः** । ऊर्ध्वाधोमध्यभेदेन तिसृणा ककुभामपि धामेति **त्रिककुद्धाम** इत्येकं नाम । येन पुनाति यो वा पुनाति ऋषिर्देवता वा तत् **पवित्रम्** । 'पुवस्संज्ञायां' 'कर्तरि चर्षिदेवतयोः' इति पाणिनिस्मरणात् इत्रप्रत्ययः ।

**अशुभानि निराचष्टे तनोति शुभसन्ततिम् ।**
**स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः ॥**

इति विष्णुपुराणवचनात्, कल्याणरूपत्वाद्वा **मङ्गलम्** । **परं** सर्वभूतेभ्यः उत्कृष्टं ब्रह्म । (मङ्गलं परमित्येकमिदं नाम सविशेषणम् ॥) २० ॥

## ईशानः प्राणदः प्राणो ज्येष्ठश्श्रेष्ठः प्रजापतिः ।
## हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ २१ ॥

---

*तै. उ. २-४.　　†याज्ञिक्यु. १३.　　‡उद्योगप. ७०-५.
§शान्तिप. ३४३.　　¶तै. आ. ४-४२.

सर्वभूतनियन्तृत्वात् **ईशानः** । प्राणान् ददाति चेष्टयतीति **प्राणदः**, 'को ह्येवान्यात्कः प्राण्यात्'* इति श्रुतेः । यद्वा— प्राणान् कालात्मना द्यति खण्डयतीति, प्राणान् दापयति शोधयतीति वा, प्राणान् दाति लुनातीति वा **प्राणदः** । प्राणितीति **प्राणः** क्षेत्रज्ञः परमात्मा वा, 'प्राणस्य प्राणम्'† इति श्रुतेः । मुख्यप्राणो वा । वृद्धतमो **ज्येष्ठः**, 'ज्य च' इत्यधिकारे 'वृद्धस्य च' इति वृद्धशब्दस्य ज्यादेशविधानात् । प्रशस्यतमः **श्रेष्ठः**, 'प्रशस्यस्य श्रः' इत्यादेशविधानात् । 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च'‡ इति श्रुतेः मुख्यप्राणो वा, 'श्रेष्ठश्च'§ इत्यधिकरणसिद्धत्वात् । सर्वकारणत्वाद्वा ज्येष्ठः । सर्वातिशयत्वाद्वा श्रेष्ठः । ईश्वरत्वेन सर्वासां प्रजानां पतिः **प्रजापतिः** । हिरण्मयाण्डान्तर्वर्तित्वात् **हिरण्यगर्भो** ब्रह्मा विरिञ्चिः तदात्मा,—'हिरण्यगर्भस्समवर्तताग्रे'¶ इति श्रुतेः । भूर्गर्भे यस्य सः **भूगर्भः** । मायाः श्रियाः धवः पतिः **माधवः** । मधुविद्यावबोध्यत्वाद्वा ।

> **मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम्** ।**

इति व्यासवचनाद्वा माधवः । मधुनामानमसुरं सूदितवानिति **मधुसूदनः** ।

> **कर्णमिश्रोद्भवं चापि मधुनाममहासुरम् ।**
> **ब्रह्मणोपचितिं कुर्वन् जघान पुरुषोत्तमः ॥**
> **तस्य तात वधादेव देवदानवमानवाः ।**
> **मधुसूदन इत्याहुः ऋषयश्च जनार्दनम् ॥**

इति महाभारते ॥ २१ ॥

---

*तै. उ. २-७. †केन. १-२. ‡बृह. ८-१-१.
§ब्रह्मसू. २-४-८. ¶ तै. सं. ४-१-८. **उद्योगप. ७०-४.

**ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।**
**अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ २२ ॥**

सर्वशक्तिमत्तया **ईश्वरः** । विक्रमः शौर्यं, तद्योगात् **विक्रमी** । धनुरस्यास्तीति **धन्वी** ।

रामश्शस्त्रभृतामहम् ।*

इति भगवद्वचनम् । मेधा बहुग्रन्थधारणसामर्थ्यं सा यस्यास्ति स **मेधावी** । 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । विचक्रमे जगद्विश्वं तेन **विक्रमः** । विना गरुडेन पक्षिणा क्रमाद्वा । क्रमणात्, क्रमहेतुत्वाद्वा **क्रमः**, 'क्रान्ते विष्णुं'† इति मनुवचनात् । अविद्यमानः उत्तमो यस्मात् सः **अनुत्तमः** । 'यस्मात्परं नापरमस्ति किंचित्'‡ इति श्रुतेः,

न त्वत्समोस्त्यभ्यधिकः कुतोन्यः

इति स्मृतेश्च । दैत्यादिभिः धर्षयितुं न शक्यत इति **दुराधर्षः** । प्राणिनां पुण्यापुण्यात्मकं कर्म कृतं जानातीति **कृतज्ञः** । पत्रपुष्पाद्यल्पमपि प्रयच्छतां मोक्षं ददातीति वा । पुरुषप्रयत्नः **कृतिः**, क्रिया वा, सर्वात्मत्वात्तदाधारतया वा लक्ष्यते कृत्येति वा **कृतिः** । स्वमहिमप्रतिष्ठितत्वात् **आत्मवान्** । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि'§ इति श्रुतेः ॥ २२ ॥

**सुरेशश्शरणं शर्म विश्वरेताः प्रजाभवः ।**
**अहस्संवत्सरो व्यालः प्रत्ययस्सर्वदर्शनः ॥ २३ ॥**

सुराणां देवानामीशः **सुरेशः** । सूपपदो वा राधातुः; शोभन-

*भगव. १०-३१. ११-४३. †१२-१२१.
‡शाण्डिल्यु. १२. §छान्दो. ७-२४-१.

दातॄणां ईशः **सुरेशः** । आर्तानामार्तिहरणत्वात् **शरणम्** । परमानन्दरूपत्वात् **शर्म** । विश्वस्य कारणत्वात् **विश्वरेताः** । सर्वाः प्रजा यत्सकाशादुद्भवन्ति स **प्रजाभवः** । प्रकाशरूपत्वात् **अहः** । कालात्मना स्थितो विष्णुः **संवत्सर** इत्युक्तः । व्यालवद्गृहीतुमशक्यत्वात् **व्यालः** । प्रतीतिः प्रज्ञा **प्रत्ययः**, 'प्रज्ञानं ब्रह्म'* इति श्रुतेः । सर्वाणि दर्शनात्मकानि अक्षीणि यस्य स **सर्वदर्शनः**, सर्वात्मकत्वात् 'विश्वतश्चक्षुः'† 'विश्वाक्षं'‡ इति श्रुतेः ॥ २३ ॥

**अजस्सर्वेश्वरस्सिद्धस्सिद्धिस्सर्वादिरच्युतः ।**
**वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥ २४ ॥**

न जायत इति **अजः**, 'न जातो न जनिष्यते'§ इति श्रुतेः ।

**न हि जातो न जायेयं न जनिष्ये कदाचन ।**
**क्षेत्रज्ञस्सर्वभूतानां तस्मादहमजस्स्मृतः ॥**¶

इति महाभारते । सर्वेषामीश्वराणामीश्वरः **सर्वेश्वरः** । 'एष सर्वेश्वरः'** इति श्रुतेः । नित्यनिष्पन्नरूपत्वात् **सिद्धः** । सर्ववस्तुषु संविद्रूपत्वात्, निरतिशयरूपत्वाद्वा **सिद्धिः** । स्वर्गादीनां विनाशित्वादफलत्वम् । सर्वभूतानामादिकारणत्वात् **सर्वादिः** । स्वरूपसामर्थ्यात् न च्युतो न च्यवते न च्यविष्यते इति **अच्युतः** । 'शाश्वतं शिवमच्युतम्'‡ इति श्रुतेः । तथा च भगवद्वचनम्—

**यस्मान्न च्युतपूर्वोहमच्युतस्तेन कर्मणा ।**¶

इति ॥

---

*ऐतरेयो. ,३-३ †याज्ञिक्यु. १. ‡याज्ञिक्यु. १३.
§ऋक्स. १-८१-५. ¶शान्तिप. ३४३. **बृह. ६-४-२.

इति नाम्नां प्रथमं शतकम् ॥

वर्षणात् सर्वकामानां धर्मो वृषः । कात् तोयात् भूमिमपादिति कपिर्वराहः । वृषत्वात्कपित्वाच्च वृषाकपिः ।

कपिर्वराहश्श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद्वृषाकपिं प्राह काश्यपो मां प्रजापतिः ॥*

इति महाभारते । इयानिति मातुं परिच्छेत्तुं न शक्यते आत्मा अस्येति अमेयात्मा । सर्वसम्बन्धविनिर्गतः सर्वयोगविनिस्सृतः, 'असङ्गो ह्ययं पुरुषः'† इति श्रुतेः । नानाशास्त्रोक्ताद्योगादपगतो वा ॥ २४ ॥

**वसुर्वसुमनास्सत्यस्समात्मा सम्मितस्समः ।**
**अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥२५॥**

वसतीति वसुः ।

वसूनां पावकश्चास्मि§

इत्युक्तो वा वसुः । वसुशब्देन धनवाचिना प्राशस्त्यं लक्ष्यते । प्रशस्तं मनो यस्य स वसुमनाः । रागद्वेषादिभिः क्लेशैर्मदादिभिरुपक्लेशैश्च यतो न कलुषितं ततस्तन्मनः प्रशस्तम् । अवितथरूपत्वात्परमात्मा सत्यः । 'सत्यं ज्ञानमनन्तं ब्रह्म'¶ इति श्रुतेः । मूर्तामूर्तात्मकत्वाद्वा, 'सच्च त्यच्चाभवत्'¶ इति श्रुतेः । सदिति प्राणः, तीत्यन्नं, यमिति दिवाकरः, तेन प्राणान्नादित्यरूपत्वाद्वा सत्यः । 'सदिति प्राणास्तीत्यन्नं यमित्यसावादित्यः' इति श्रुतेः । सत्सु साधुत्वाद्वा—सत्यः । सम आत्मा मनो यस्य

*शान्तिप. ३४३. †बृह. ६-३-१५. ‡द्व.
§भगव. १०-२३. ¶तै. उ. २-१. २-६.

रागद्वेषादिभिरदूषितः स समात्मा । सर्वभूतेषु सम एक आत्मा वा, 'सम आत्मेति विद्यात्'* इति श्रुतेः । सर्वैरप्यर्थजातैः परिच्छिन्नोमितः, सर्वैरपरिच्छिन्नोमित इति असम्मितः । सर्वकालेषु सर्वविकाररहितत्वात् समः । मया लक्ष्म्या सह वर्तत इति वा समः । पूजितः स्तुतः संस्मृतो वा सर्वफलं ददाति न वृथा करोतीति अमोघः । अवितथसंकल्पाद्वा, 'सत्यकामस्सत्यसंकल्पः'† इति श्रुतेः । हृदयस्थं पुण्डरीकमश्नुते व्याप्नोति तत्रोपलक्षित इति पुण्डरीकाक्षः । 'यत्पुण्डरीकं पुरमध्यसंस्थम्'‡ इति श्रुतेः । पुण्डरीकाकारे उभे अक्षिणी अस्येति वा । धर्मलक्षणं कर्मास्येति वृषकर्मा । धर्मार्थमाकृतिरस्येति वृषाकृतिः ।

धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।§

इति भगवद्वचनात् ॥ २५ ॥

**रुद्रो बहुशिरा बभ्रुर्विश्वयोनिश्शुचिश्रवाः ।**
**अमृतश्शाश्वतस्स्थाणुर्वरारोहो महातपाः ॥ २६ ॥**

संहारकाले प्रजाः संहरन् रोदयतीति रुद्रः । रुदं राति ददातीति वा, रुद्दुःखं दुःखकारणं वा, द्रावयतीति वा रुद्रः । बहूनि शिरांसि यस्येति बहुशिराः, 'सहस्रशीर्षा'¶ इति श्रुतेः । बिभर्ति लोकानिति बभ्रुः । विश्वस्य कारणत्वात् विश्वयोनिः । शुचीनि श्रवांसि नामानि श्रवणीयान्यस्येति शुचिश्रवाः । न विद्यते मृतं मरणमस्येति अमृतः ।, 'अजरोऽ-

---

*कौषी, ३-९. †छान्दोग्यो. ८-१-५. ‡याज्ञिक्यु. १०.
§भगव. ४-८. ¶तै. आ. ३-१२.

मरः'* इति श्रुतेः । शाश्वतश्चासौ स्थाणुश्चेति **शाश्वतस्थाणुः**। वर आरोहोऽङ्कोऽस्येति **वरारोहः** । वरमारोहणं यस्मिन्निति वा, आरूढानां पुनरावृत्त्यसम्भवात्, 'न च पुनरावर्तते'† इति श्रुतेः,

यं प्राप्य न निवर्तन्ते‡

इति स्मृतेश्च । महत्सृज्यविषयं तपो ज्ञानमस्येति **महातपाः**। 'यस्य ज्ञानमयं तपः'§ इति श्रुतेः । ऐश्वर्यं प्रतापो वा तपो महदस्येति वा ॥ २६ ॥

**सर्वगस्सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।**
**वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ २७ ॥**

सर्वत्र गच्छतीति **सर्वगः**, कारणत्वेन व्याप्तत्वात् । सर्वं वेत्ति विन्दतीति वा **सर्ववित्** । भातीति **भानुः** ।, 'तमेव भान्तमनु भाति सर्वम्'§ इति श्रुतेः ।

'यदादित्यगतं तेजः'‡

इत्यादिस्मृतेश्च । सर्वविच्चासौ भानुश्चेति **सर्वविद्भानुः** । विष्वगञ्चति पलायते दैत्यसेना यस्य रणोद्योगमात्रेणेति **विष्वक्सेनः**। जनान्दुर्जनानर्दयति हिनस्ति, नरकादीन्गमयतीति वा **जनार्दनः**। जनैः पुरुषार्थमभ्युदयनिश्श्रेयसलक्षणं याच्यत इति **जनार्दनः**। वेदयतीति **वेदः**,

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥‡

इति भगवद्वचनात् । यथावत् वेदार्थं वेत्तीति **वेदवित्**,

वेदान्तकृद्वेदविदेव चाहम् ।‡

इति भगवद्वचनात् ॥

---

*कौषी. ३-८. †छान्दाग्यो. ८-१५-१.
‡भगव. ८-२१. १५-१२. १०-११. १५-१५. §मुण्डको. १-१-९. २-२-१०.

सर्वे वेदास्सर्वविद्यास्सशास्त्रास्सर्वे यज्ञास्सर्व इज्याश्च कृष्णः।
विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन् सर्वयज्ञास्समाप्ताः॥

इति महाभारते । अव्यङ्गः ज्ञानादिभिः परिपूर्णोऽविकल उच्यते। व्यङ्गो व्यक्तिर्न विद्यत इति वा अव्यङ्गः, 'अव्यक्तोयम्'* इति भगवद्वचनात् । वेदा अङ्गभूता यस्य स वेदाङ्गः, । वेदान्विन्ते विचारयतीति वेदवित् । क्रान्तदर्शी कविः सर्वदृक्, 'नान्योऽतोस्ति द्रष्टा'† इत्यादिश्रुतेः, 'कविर्मनीषी'‡ इत्यादिमन्त्रवर्णात् ॥ २७ ॥

## लोकाध्यक्षस्सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
## चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ २८ ॥

लोकानध्यक्षयतीति लोकाध्यक्षः सर्वेषां लोकानां प्राधान्येनोपद्रष्टा । लोकपालानां सुराणामध्यक्षः सुराध्यक्षः । धर्माधर्मौ साक्षादीक्षतेऽनुरूपं फलं दातुं तस्मात् धर्माध्यक्षः। कृतश्च कार्यरूपेण अकृतश्च कारणरूपेणेति कृताकृतः । सर्गादिषु पृथग्विभूतयश्चतस्रः सन्त्यस्येति चतुरात्मा ।

ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतस्सृष्टिहेतवः ॥
विष्णुर्मन्वादयः कालस्सर्वभूतानि च द्विज ।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥
रुद्रः कालोन्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्धा प्रलयायैता जनार्दनविभूतयः ॥§

इति वैष्णवपुराणे ।

---

*२-२५. †बृह. ५-७-२३. ‡ईशो. ८. §१-२२.

**व्यूह्यात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः।**
**सृष्ट्यादीन्प्रकरोत्येष विश्रुतात्मा जनार्दनः॥**

इति व्यासवचनात्। **चतुर्व्यूहः**। दंष्ट्राश्चतस्रो यस्येति **चतुर्दंष्ट्रो** नृसिंहविग्रहः। सादृश्याद्वा शृङ्गं दंष्ट्रेत्युच्यते, 'चत्वारि शृङ्गा'* इति श्रुतेः। चत्वारो भुजा अस्येति **चतुर्भुजः**॥ २८॥

## भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः।
## अनघो विजयो जेता विश्वयोनिः पुनर्वसुः॥२९॥

प्रकाशैकरसत्वात् **भ्राजिष्णुः**। भोज्यरूपतया प्रकृतिर्माया **भोजनं** प्रकृतिरुच्यते। पुरुषरूपेण भुङ्क्ते इति **भोक्ता**। हिरण्याक्षादीन् सहते अभिभवतीति **सहिष्णुः**। हिरण्यगर्भरूपेण जगदादावुत्पद्यते स्वयमिति **जगदादिजः**। अघं न विद्यतेऽस्येति **अनघः**। 'अपहतपाप्मा'† इति श्रुतेः। विजयते ज्ञानवैराग्यैश्वर्यादिभिर्गुणैः विश्वमिति **विजयः**। यतोतिशेते सर्वभूतानि स्वभावतो **जेता**। विश्वं योनिरस्येति, विश्वश्चासौ योनिश्चेति वा **विश्वयोनिः**। पुनःपुनः शरीरेषु वसति क्षेत्रज्ञरूपेणेति **पुनर्वसुः**॥ २९॥

## उपेन्द्रो वामनः प्रांशुरमोघश्शुचिरूर्जितः।
## अतीन्द्रस्सङ्ग्रहस्सर्गो धृतात्मा नियमो यमः॥३०॥

उपरि इन्द्रः **उपेन्द्रः**।

**ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः।**
**उपेन्द्र इति कृष्ण त्वां गास्यन्ति भुवि देवताः॥‡**

इति हरिवंशे।

---

*ऋक्सं. ४-५८-३. †छान्दोग्यो. ८-१-५. ‡७६-४७.

बलिं वामनरूपेण याचितवानिति* **वामनः** । सम्भजनीय इति वा,

मध्ये वामनमासीनं विश्वे देवा उपासते ।†

इति मन्त्रवर्णात् । स एव जगत्त्रयं क्रममाणः प्रांशुरभूदिति **प्रांशुः** ।

तोये तु पतिते हस्ते वामनोभूदवामनः ।
सर्वदेवमयं रूपं दर्शयामास वै प्रभुः ॥
भूः पादौ द्यौश्शिरश्चास्य चन्द्रादित्यौ च चक्षुषी ।‡

इत्यादि विश्वरूपं दर्शयित्वा

तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे ।
नभः प्रक्रममाणस्य नाभ्यां तौ समवस्थितौ ॥
दिवमाक्रममाणस्य जानुमूले व्यवस्थितौ ।‡

इति प्रांशुत्वं दर्शितं हरिवंशे । न मोघं चेष्टितं यस्य सः **अमोघः** । स्मरतां स्तुवतां अर्चयतां च पावनत्वात् **शुचिः** ।

अस्पर्शश्च महान् शुचि ।

इति मन्त्रवर्णात् । बलप्रकर्षशालित्वात् **ऊर्जितः** । अतीत्येन्द्रं स्थितो ज्ञानैश्वर्यादिभिः स्वभावसिद्धैरिति **अतीन्द्रः** । सर्वेषां प्रतिसंहारात् **संग्रहः** । सृज्यरूपतया सर्गहेतुत्वाद्वा **सर्गः** । एकरूपेण जन्मादिरहिततया धृत आत्मा येन स **धृतात्मा** । स्वेषुस्वेष्वधिकारेषु प्रजा नियमयतीति **नियमः** । अन्तर्यच्छतीति **यमः** ॥ ३० ॥

---

*'वामयति त्याजयति मद बलिमिति वमेरुद्गिरणार्थाण्णिजन्ताल्ल्युट......इत्यभिप्रेत्य व्याचष्टे.—बलिमिति' इति व्याख्यायाम्.

†कठ ५-३.  ‡२६२-२६३.

**वेद्यो वैद्यस्सदायोगी वीरहा माधवो मधुः ।**
**अतीन्द्रियो महामायो महोत्साहो महाबलः ॥३१॥**

निश्श्रेयसार्थिभिः वेदनार्हत्वात् **वेद्यः** । विद्यानां वेदितृत्वात् **वैद्यः** । सदा आविर्भूतस्वरूपत्वात् **सदायोगी** । धर्मत्राणाय वीरान् असुरान् हन्तीति **वीरहा** । मायाः विद्यायाः पतिः **माधवः** ।

> **मा विद्या च हरे प्रोक्ता तस्या ईशो यतो भवान् ।**
> **तस्मान्माधवनामाऽसि धवस्स्वामीति शब्दितः ॥***

इति हरिवंशे । यथा मधु परां प्रीतिमुत्पादयति अयमपि तथेति **मधु.** । 'अशब्दमस्पर्शं'† इति श्रुतेः शब्दादिरहितत्वात् इन्द्रियाणामविषय इति **अतीन्द्रियः** । मायाविनामपि मायाकारित्वात् **महामायः** ।

> **मम माया दुरत्यया ।**‡

इति भगवद्वचनात् । जगदुत्पत्तिस्थितिलयार्थमुद्युक्तत्वात् **महोत्साहः** । बलिनामपि बलवत्त्वात् **महाबलः** ॥ ३१ ॥

**महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।**
**अनिर्देश्यवपुश्श्रीमानमेयात्मा महाद्रिधृक्§ ॥३२॥**

बुद्धिमतामपि बुद्धिमत्त्वात् **महाबुद्धिः** । महदुत्पत्तिकारणमविद्यालक्षणं वीर्यमस्येति **महावीर्यः** । महती शक्तिः सामर्थ्यमस्येति **महाशक्तिः** । महती द्युतिर्बाह्याभ्यन्तरा चास्येति **महाद्युतिः** । 'स्वयं ज्योतिः'¶ इति श्रुतेः, 'ज्योतिषां

---

*२७९-४८.　　†कठ. ३-१५.　　‡भग. ७-१४.

§भृत् इति पाठान्तरम्.　　¶बृह. ६-३-९.

ज्योतिः '* इत्यादेश्च । इदं तदिति निर्देष्टुं यन्न शक्यते परस्मै असंवेद्यत्वात् तत् अनिर्देश्यं वपुरस्येति **अनिर्देश्यवपुः** । ऐश्वर्यलक्षणा समग्रा श्रीर्यस्य स **श्रीमान्** । सर्वैः प्राणिभिरमेया बुद्धिरात्मा यस्य सः **अमेयात्मा** । महान्तमद्रिं मन्दरं गोवर्धनं वा अमृतमथने गोरक्षणे च धृतवानिति **महाद्रिधृक्**† ॥ ३२ ॥

**महेष्वासो महीभर्ता श्रीनिवासस्सतां गतिः ।**
**अनिरुद्धस्सुरानन्दो गोविन्दो गोविदां पतिः॥३३॥**

महानिष्वास इषुक्षेपो यस्य स **महेष्वासः** । एकार्णवां प्लुतां महीं बभारेति **महीभर्ता** । यस्य वक्षस्यनपायिनी श्रीर्वसति स **श्रीनिवासः** । सतां वैदिकानां पुरुषार्थसाधनहेतुः **सताङ्गतिः** । न केनापि प्रादुर्भावेषु निरुद्ध इति **अनिरुद्धः** । सुरानानन्दयतीति **सुरानन्दः** ।

> नष्टां वै धरणीं पूर्वमविन्दं वै गुहागताम् ।
> गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः ॥‡

इति मोक्षधर्मवचनात् **गोविन्दः** ।

> अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः ।
> गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् ॥§

इति ।

> गौरेषा तु तथा वाणी तां च विन्दयते भवान् ।
> गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान् ॥§

इति च हरिवंशे । गौर्वाणी, तां विदन्तीति गोविदः, तेषां पतिर्विशेषेणेति **गोविदांपतिः** ॥ ३३ ॥

---

*मुण्ड. २-२-९. †धृत् इति पाठान्तरम्. ‡शान्ति. ३४३-४१.
§७६-४५. २७९-४९.

**मरीचिर्दमनो हंसस्सुपर्णो भुजगोत्तमः ।**
**हिरण्यनाभस्सुतपाः पद्मनाभः प्रजापतिः ॥३४॥**

तेजस्विनामपि तेजस्वित्वात् **मरीचिः**,

**तेजस्तेजस्विनामहम् ।***

इति भगवद्वचनात् । स्वाधिकारात्प्रमाद्यन्तीः प्रजा दमयितुं शीलमस्येति **दमनः** । अहं स इति तादात्म्यभाविनः संसारभयं हन्तीति **हंसः** । पृषोदरादित्वाच्छब्दसाधुत्वम् । हन्ति गच्छति सर्वशरीरेष्विति वा, 'हंसश्शुचिषत्'† इति मन्त्रवर्णात् । शोभनपर्णत्वात् **सुपर्णः** । 'द्वा सुपर्णा'‡ इति मन्त्रवर्णात् । भुजेन गच्छतामुत्तमो **भुजगोत्तमः** । हिरण्यमिव कल्याणी नाभिरस्येति **हिरण्यनाभः** । हितरमणीयनाभित्वाद्वा । बदरिकाश्रमे नरनारायणरूपेण शोभनं तपश्चरतीति **सुतपाः** ।

**मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।**

इति स्मृतेः । पद्ममिव सुवर्तुला नाभिरस्येति, हृदयपद्मस्य नाभौ मध्ये प्रकाशनाद्वा **पद्मनाभः** । पृषोदरादित्वात्साधुत्वम् । प्रजानां पतिः पिता **प्रजापतिः** ॥ ३४ ॥

**अमृत्युस्सर्वदृक् सिंहस्सन्धाता सन्धिमान् स्थिरः ।**
**अजो दुर्मर्षणश्शास्ता विश्रुतात्मा सुरारिहा ॥३५॥**

मृत्युर्विनाशस्तद्धेतुर्वाऽस्य न विद्यते इति **अमृत्युः** । प्राणिनां कृताकृतं सर्वं पश्यति स्वाभाविकेन बोधेनेति **सर्वदृक्** । हिन-

*भग. १०-३६. †कठ. ५-२. ‡श्वेत. ४-६.

सीति सिंहः । पृषोदरादित्वात्साधुत्वम् ॥

इति नाम्नां द्वितीयं शतं विवृतम् ।

कर्मफले पुरुषान् सन्धत्त इति सन्धाता । फलभोक्ता च स एवेति सन्धिमान् । सदैकरूपत्वात् स्थिरः । अजति गच्छति क्षिपति इति वा अजः । मर्षितुं सोढुं दानवादिभिर्न शक्यते इति दुर्मर्षणः । श्रुतिस्मृत्यादिभिः सर्वेषामनुशिष्टिं करोतीति शास्ता । विशेषेण श्रुत.* सत्यज्ञानादिलक्षणः आत्मा अतो विश्रुतात्मा । सुरारीणां निहन्तृत्वात् सुरारिहा ॥ ३५ ॥

**गुरुर्गुरुतमो धाम सत्यस्सत्यपराक्रमः ।**
**निमिषोऽनिमिषस्स्रग्वी वाचस्पतिरुदारधीः ॥३६॥**

समस्तविद्यानामुपदेष्टृत्वात्, सर्वेषां जनकत्वाद्वा गुरुः । विरिञ्चादीनामपि ब्रह्मविद्यासंप्रदायकत्वात् गुरुतमः, 'यो ब्रह्माणम्'† इति मन्त्रवर्णात् । धाम ज्योतिः, 'नारायणपरो ज्योतिः'‡ इति मन्त्रवर्णात् । सर्वकामानामास्पदत्वाद्वा धाम, 'परमं ब्रह्म धाम'§ इति श्रुतेः । सत्यवचनधर्मरूपत्वात् सत्यः । 'तस्मात्सत्यं परमं वदन्ति'¶ इति श्रुते. । सत्यस्य सत्यमिति वा । 'प्राणा वै सत्यं तेषामेव सत्यम्'** इति श्रुतेः । सत्यः अवितथः पराक्रमो यस्य स सत्यपराक्रमः । निमीलिते यतो नेत्रे योगनिद्रारतस्य अतो निमिषः । नित्यप्रबुद्धस्वरूपत्वात् अनिमिषः । मत्स्यरूपतया वा अनिमिषः । भूततन्मात्ररूपां वैजयन्त्याख्यां स्रजं नित्यं बिभर्तीति

*श्रुतो येनेति क्वचित्पाठः. †श्वे. ६·१८. ‡याज्ञिक्यु. १३.
§मु. ३-२-१. ¶याज्ञिक्यु. ७९. **बृह. ४-१-२०.

**स्रग्वी** । वाचो विद्यायाः पतिः **वाचस्पतिः** । शब्दार्थविषया धीर्बुद्धिरस्य इति **उदारधीः** । **वाचस्पतिरुदारधीः** इत्येकं नाम ॥ ३६ ॥

**अग्रणीर्ग्रामणीश्श्रीमान्न्यायो नेता समीरणः ।**
**सहस्रमूर्धा विश्वात्मा सहस्राक्षस्सहस्रपात् ॥३७॥**

अग्रं प्रकृष्टं पदं नयति मुमुक्षून् इति **अग्रणीः** । भूतग्रामस्य नेतृत्वात् **ग्रामणीः** । कान्तिः सर्वातिशयिताऽस्येति **श्रीमान्** । प्रमाणानुग्राहको भेदकारकस्तर्को **न्यायः** । जगद्यन्त्रनिर्वाहको **नेता** । श्वसनरूपेण भूतानि चेष्टयतीति **समीरणः** । सहस्राणि मूर्धानोऽस्येति **सहस्रमूर्धा** । विश्वस्यात्मा **विश्वात्मा** । सहस्राण्यक्षीणि यस्य स **सहस्राक्षः** । सहस्राणि पादा अस्येति **सहस्रपात्** ।

**सहस्रशीर्षा पुरुषः । सहस्राक्षस्सहस्रपात् ।***

इति श्रुतेः ॥ ३७ ॥

**आवर्तनो निवृत्तात्मा संवृतस्संप्रमर्दनः ।**
**अहस्संवर्तको वह्निरनिलो धरणीधरः ॥ ३८ ॥**

आवर्तयितुं सञ्चारचक्रं शीलमस्येति **आवर्तनः** । संसारबन्धान्निवृत्त आत्मा स्वरूपमस्येति **निवृत्तात्मा** । आच्छादिकया अविद्यया संवृतत्वात् **संवृतः** । सम्यक् प्रमर्दयति रुद्रकालाद्याभिः विभूतिभिरिति **संप्रमर्दनः** । सम्यगह्नां प्रवर्तनात् सूर्यः **अहस्सं-**

*तै. आ. ३-१२.

**वर्तकः** । वहनात् **वह्निः** । अनादित्वादनिति योसौ* **अनिलः** । शेषरूपेण वराहरूपेण च धरणीं धत्त इति **धरणीधरः** ॥३८॥

**सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।**
**सत्कर्ता सत्कृतस्साधुर्जह्नुर्नारायणो नरः ॥ ३९ ॥**

शोभनः प्रसादो यस्य अपकारवतामपि शिशुपालादीनां मोक्षप्रदातृत्वादिति **सुप्रसादः** । रजस्तमोभ्यामकलुषित आत्माऽन्तःकरणमस्येति **प्रसन्नात्मा** । यद्वा—प्रसन्नस्वभावः कारुणिक इत्यर्थः । अवाप्तसर्वकामत्वाद्वा । विश्वं धृष्णोतीति **विश्वधृक्** । ञि धृषा प्रागल्भ्ये । विश्वं भुङ्क्ते भुनक्ति पालयतीति वा **विश्वभुक्** । हिरण्यगर्भादिरूपेण विविधं भवतीति **विभुः** । 'नित्यं विभुम्'† इति मन्त्रवर्णात् । सत्करोति पूजयतीति **सत्कर्ता** । पूजितैरपि पूजितः **सत्कृतः** । न्यायप्रवृत्ततया **साधुः** । साधयतीति वा । साध्यभेदानुपादानात् साध्यमात्रसाधको वा । जनान् संहारसमये अपह्नुते अपनयतीति **जह्नुः** । जहात्यविदुषोऽभक्तान् अपनयति परमिति वा । नर आत्मा, ततो जातान्याकाशादीनि नाराणि कार्याणि, तानि कार्याणि अयं कारणात्मना व्याप्नोति । अतश्च तान्ययनमस्येति **नारायणः** ।

**यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः ॥‡**

इति मन्त्रवर्णात् ।

**नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।**
**तान्येव चायनं तस्य तेन नारायणस्स्मृतः ॥§**

---

*'अनादानादनिल इव' 'अनादाताअनिलयो वा' इत्यपि पाठौ.
†मुण्डको. १-१-६. ‡याज्ञिक्यु. १३. §उद्योगप. १-१-३.

इति महाभारते । नाराणामयनत्वात् प्रलये इति वा । 'यत्प्र-यन्त्यभिसंविशन्ति '* इति श्रुतेः ।

**नाराणामयनं यस्मात्तस्मान्नारायणस्स्मृतः ।**

इति ब्रह्मवैवर्तात् ॥

**आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।**
**ता यदस्यायनं पूर्वं तस्मान्नारायणस्स्मृतः ॥**†

इति मनुवचनाद्वा **नारायणः** ।

**नारायणाय नम इत्ययमेव सत्यः**
**संसारघोरविषसंहरणाय मन्त्रः ।**
**शृण्वन्तु भव्यमतयो यतयोस्तरागाः**
**उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः ॥**

इति श्रीनारसिंहपुराणे ।

**नयतीति नरः प्रोक्तः परमात्मा सनातनः ।**

इति व्यासवचनम् ॥ ३९ ॥

## असङ्ख्येयोप्रमेयात्मा विशिष्टश्शिष्टकृच्छुचिः ।
## सिद्धार्थस्सिद्धसङ्कल्पस्सिद्धिदस्सिद्धिसाधनः ॥४०॥

यस्मिन् सङ्ख्यानामरूपभेदादिः न विद्यत इति **असङ्ख्येयः** । अप्रमेय आत्मा स्वरूपमस्येति **अप्रमेयात्मा** । अतिशेते सर्वं अतो **विशिष्टः** । शिष्टं शासनं करोतीति **शिष्टकृत्** । शिष्टान् करोति पालयतीति वा । सामान्यवचनो धातुर्विशेषवचनो दृष्टः, कुरु काष्ठानीत्याहरणे यथा । निरञ्जनः **शुचिः** । सिद्धो निर्वृत्त अर्थ्यमानोर्थोस्येति **सिद्धार्थः**, 'सत्यकामः '‡ इति श्रुतेः । सिद्धो निष्पन्नः सङ्कल्पोस्येति **सिद्धसङ्कल्पः**, 'सत्यसङ्कल्पः '‡

*तै. उ. ३-१. †१-१०. ‡छा. उ. ८-१-५.

इति श्रुतेः । सिद्धिं फलं कर्तृभ्यः स्वाधिकारानुरूपतो ददातीति **सिद्धिदः** । सिद्धेः साधकत्वात् **सिद्धिसाधनः** ॥ ४० ॥

**वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।**
**वर्धनो वर्धमानश्च विविक्तश्श्रुतिसागरः ॥ ४१ ॥**

वृषो धर्मः पुण्यं, तदेवाहो द्वादशाहादि क्रतुः वृषाहः; सोस्यास्तीति **वृषाही** । वर्षत्येष भक्तेभ्यः कामानिति **वृषभः** । **विष्णुः** 'विष्णुर्विक्रमणात्'* इति व्यासेनोक्तेः । वृषरूपाणि सोपानपर्वाण्यारुहुः परं धामारुरुक्षोरित्यतो **वृषपर्वा** । प्रजा वर्षतीवोदरमस्येति **वृषोदरः** । वर्धयतीति **वर्धनः** । प्रपञ्चरूपेण वर्धत इति **वर्धमानः** । इत्थं वर्धमानोपि पृथगेव तिष्ठतीति **विविक्तः** । श्रुतयः सागर इवात्र निधीयन्ते इति **श्रुतिसागरः** ॥ ४१ ॥

**सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।**
**नैकरूपो बृहद्रूपश्शिपिविष्टः प्रकाशनः ॥ ४२ ॥**

शोभना भुजा जगद्रक्षाकरा यस्येति **सुभुजः** । पृथिव्यादीन्यपि लोकधारकाण्यन्यैः धारयितुं अशक्यानि धारयन् न केनचिद्धारयितुं शक्य इति **दुर्धरः** । दुःखेन ध्यानसमये मुमुक्षुभिः हृदये धार्यत इति वा **दुर्धरः** । यतो निस्सृता **ब्रह्ममयी** वाक् तस्मात् **वाग्मी** । महांश्चासाविन्द्रश्चेति **महेन्द्रः** ईश्वराणामीश्वरः । वसु धनं ददातीति **वसुदः** । 'अन्नादो वसुदानः'‡ इति श्रुतेः । दीयमानं तद्वस्वपि स एवेति **वसुः** ।

---

*उद्योगप. ७०-१३. †यास्केनेत्यपि क्वचित्पाठः. ‡बृह. ६-४-२४.

आच्छादयत्यात्मानं माययेति वा **वसुः** । अन्तरिक्ष एव वसति नान्यत्रेत्यसाधारणेन वसनेन वायुर्वसुः, 'वसुरन्तरिक्षसत्'* इति श्रुतेः । एकं रूपमस्य न विद्यत इति **नैकरूपः** । 'इन्द्रो मायाभिः पुरुरूप ईयते'† इति श्रुतेः, 'ज्योतींषि विष्णुः'‡ इत्यादिस्मृतेश्च । बृहद्वाराहादिरूपमस्य **बृहद्रूपः** । शिपिः पशवः, तेषु प्रतितिष्ठति यज्ञरूपेणेति **शिपिविष्टः**, 'यज्ञो वै विष्णुः पशवश्शिपिर्यज्ञ एव पशुषु प्रति तिष्ठति'§ इति श्रुतेः । शिपयो रश्मयस्तेषु निविष्ट इति वा ।

> **शैत्याच्छयनयोगाच्च शीति वारि प्रचक्षते ।**
> **तत्पानाद्रक्षणाच्चैव शिपयो रश्मयो मताः ॥**
> **तेषु प्रवेशाद्विश्वेशश्शिपिविष्ट इहोच्यते ।**

सर्वेषां प्रकाशनशीलत्वात् **प्रकाशनः** ॥ ४२ ॥

## ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
## ऋद्धस्स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥४३॥

ओजः प्राणबलं, तेजः शौर्यादयो गुणाः, द्युतिः दीप्तिः, ताः धारयतीति **ओजस्तेजोद्युतिधरः** । अथवा—ओजस्तेज इति नामद्वयम् ।

> **बलं बलवतां चाहम् ।¶**
>
> **तेजस्तेजस्विनामहम् ।¶**

इति भगवद्वचनात् । ज्ञानलक्षणा दीप्तिं धारयतीति **द्युतिधरः** । प्रकाशस्वरूपः आत्मा यस्य स **प्रकाशात्मा** । सवित्रादिविभूतिभिः विश्वं प्रतापयतीति **प्रतापनः** । धर्मज्ञानवैराग्यादिभिः

---

*याजुस्यु. ४०. †बृह. ४-५-१९. ‡विष्णुपु. २-१२-३८.
§तै. सं. २-५-५. ¶भग. ७-११, १०.

उपेतत्वात् **ऋद्धः** । स्पष्टमुदात्तमोङ्कारलक्षणमस्येति **स्पष्टाक्षरः** । ऋग्यजुस्सामलक्षणो **मन्त्रः** । मन्त्रबोध्यत्वाद्वा **मन्त्रः** । संसारतापतिग्मांशुतापतापितचेतसां चन्द्रांशुरिवाह्लादकरत्वात् **चन्द्रांशुः** । भास्करद्युतिसाधर्म्यात् **भास्करद्युतिः** ॥ ४३ ॥

**अमृतांशूद्भवो भानुश्शशबिन्दुस्सुरेश्वरः ।**
**औषधं जगतस्सेतुस्सत्यधर्मपराक्रमः ॥ ४४ ॥**

मथ्यमाने पयोनिधौ अमृतांशोश्चन्द्रस्योद्भवो यस्मात् स **अमृतांशूद्भवः** । भातीति **भानुः**, 'तमेव भान्तम्'* इत्यादिश्रुतेः । शश इव बिन्दुर्लाञ्छनमस्येति **शशबिन्दुः** चन्द्रः; तद्वत्प्रजाः पुष्णातीति **शशबिन्दुः**,

**पुष्णामि चौषधीस्सर्वाः सोमो भूत्वा रसात्मकः ।**†

इति भगवद्वचनात् । सुराणां देवानां शोभनदातॄणां चेश्वरः **सुरेश्वरः** । संसाररोगभेषजत्वात् **औषधम्** । जगतां समुत्तारणहेतुत्वात् असम्भेदकारणत्वाद्वा वर्णाश्रमादीनां **जगतः सेतुः**, 'एष सेतुर्विधरण एषां लोकानामसंभेदाय'‡ इति श्रुतेः । सत्या अवितथा धर्मा ज्ञानादयो गुणाः पराक्रमश्च यस्य सः **सत्यधर्मपराक्रमः** ॥ ४४ ॥

**भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।**
**कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ ४५ ॥**

भूतभव्यभवतां भूतग्रामाणां नाथः नाथ्यते तानुपतपति तेषामीष्टे शास्तीति वा **भूतभव्यभवन्नाथः** । पवत इति **पवनः** ।

---

*कठो. २-२-१५. †१५-१३. ‡बृह. ६-४-२२.

**पवनः पवतामस्मि***

इति भगवद्वचनात् । पावयतीति **पावनः**, 'भीषाऽस्माद्वातः पवते'† इति श्रुतेः । अनान् प्राणान् आत्मत्वेन लातीति जीवः **अनलः** । नालतीति णल्तेर्गन्धवाचिनो नञ्पूर्वाद्वा, 'अगन्धमरसम्'‡ इति श्रुतेः । अलं पर्याप्तमस्य न विद्यत इति वा । कामान् हन्ति मुमुक्षूणां भक्तानां हिंसकानां चेति **कामहा** । सात्त्विकानां कामान् करोतीति **कामकृत्** । कामस्य प्रद्युम्नस्य जनकत्वाद्वा अभिरूपतम **कान्तः** । काम्यते पुरुषार्थाभिकांक्षिभिरिति **कामः** । भक्तेभ्यः कामान् प्रकर्षेण ददातीति **कामप्रदः** । प्रकर्षेण भवनात् **प्रभुः** ॥ ४८ ॥

## युगादिकृद्युगावर्तो नैकमायो महाशनः ।
## अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ४९ ॥

युगादेः कालभेदस्य कर्तृत्वात् **युगादिकृत्** । युगानामारम्भकृत् इति वा ।

## इति नाम्नां तृतीयं शतकम्.

युगानि कृतादीन्यावर्तयति कालात्मनेति **युगावर्तः** । एका माया न विद्यते बह्वीर्माया वहतीति **नैकमायः** । 'नलोपोनञः' इति नकारलोपो न भवति, ञकारानुबन्धरहितस्यापि नकारस्य प्रतिषेधवाचिनो विद्यमानत्वात् । कल्पान्ते सर्वग्रसनात् महदशनमस्येति **महाशनः** । सर्वेषां बुद्धीन्द्रियाणामगम्यः **अदृश्यः** । स्थूलरूपेण व्यक्तं स्वरूपमस्येति **व्यक्तरूपः** । स्वयं प्रकाशमानत्वात् योगिनां व्यक्तरूप इति वा । **सहस्राणि** असुराणां

*१०-३१. † तै. उ. २-७. ‡ बृह. ५-८-८.

युद्धे जयतीति **सहस्राजित्** । सर्वभूतानि युद्धक्रीडादिषु सर्वत्राचिन्त्यशक्तितया जयतीति **अनन्तजित्** ॥ ४६ ॥

## इष्टोऽविशिष्टश्शिष्टेष्टश्शिखण्डी नहुषो वृषः ।
## क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ४७ ॥

परमानन्दत्वेन प्रियः, यज्ञेन पूजित इति वा **इष्टः** । सर्वेषामन्तर्यामित्वेन **अविशिष्टः** । शिष्टानां विदुषामिष्टः **शिष्टेष्टः** । शिष्टा इष्टा अस्येति वा ।

**प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः ।***

इति भगवद्वचनात् । शिष्टैरिष्ट इति वा **शिष्टेष्टः** । शिखण्डः कलापोलङ्कारोस्येति **शिखण्डी** गोपवेषधरः । यतो नह्यति भूतानि मायया अतो **नहुषः** । कामानां वर्षणात् **वृषः** धर्मः ।

**वृषो हि भगवान् धर्मस्स्मृतो लोकेषु भारत ।**
**नैघण्टुकपदाख्यानैर्विद्धि मां वृष इत्युत ॥†**

इति महाभारते । साधूनां क्रोधं हन्तीति **क्रोधहा** । असाधुषु क्रोधं करोतीति **क्रोधकृत्** । क्रियत इति कर्म जगत्, तस्य **कर्ता**, 'एतेषां पुरुषाणां यः कर्ता यस्य वै तत्कर्म स वै वेदितव्यः '‡ इति श्रुतेः । (क्रोधकृतां दैत्यादीनां कर्ता छेदक इत्येकं वा नाम) । विश्वेषामालम्बनत्वेन विश्वे बाहवोस्येति वा **विश्वबाहुः** 'विश्वतो बाहुः '§ इति श्रुतेः । महीं पूजां धरणीं वा धत्त इति **महीधरः** ॥ ४७ ॥

---

*७-१७. †शान्ति. ३४३-५८. ‡कोषी. ४-१८. §ऋक्सं. १०-८१-३.

**अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।**
**अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ४८ ॥**

षड्भावविकारशून्यत्वात् **अच्युतः** । जगदुत्पत्त्यादिकर्मभिः प्रख्यातः **प्रथितः** । सूत्रात्मना प्रजाः प्राणयतीति **प्राणः** । 'प्राणो वा अहमस्मि '* इति बह्वृचाः । सुराणामसुराणां च प्राणं बलं ददाति द्यति वेति **प्राणदः** । अदित्यां कश्यपाद्वासवस्यानुजो जात इति **वासवानुजः** । आपो यत्र निधीयन्ते सः **अपांनिधिः** ।

**सरसामस्मि सागरः ।**†

इति भगवद्वचनात् । अधितिष्ठन्ति भूतानि उपादानकारणत्वेन ब्रह्म इति **अधिष्ठानम्** ।

**मत्स्थानि सर्वभूतानि ।**‡

इति भगवद्वचनात् । अधिकारिभ्यः कर्मानुरूपं फलं प्रयच्छन् न प्रमाद्यतीति **अप्रमत्तः** । स्वे महिम्नि स्थितः **प्रतिष्ठितः** । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि '§ इति श्रुतेः ॥ ४८ ॥

**स्कन्दस्स्कन्दधरो धुर्यः वरदो वायुवाहनः ।**
**वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ४९ ॥**

स्कन्दत्यमृतरूपेण स्रवति वायुरूपेण शोषयतीति वा **स्कन्दः** । स्कन्दं धर्मपथं धारयतीति **स्कन्दधरः** । धुरं वहति समस्तभूतजन्मादिलक्षणामिति **धुर्यः** । अभिमतान् वरान् ददातीति, वरं

*ऐ. आ. २-२-३. †१०-२४. ‡९-४. §छान्दो. ७-२४-१.

दक्षिणां ददाति यजमानरूपेणेति वा **वरदः**, 'गौर्वै वरः'* इति श्रुतेः । वहत सप्त आवहादीन् वाहयतीति **वायुवाहनः**। वसति वासयत्याच्छादयतीति वा स्वयमिति वासुः, दीव्यति क्रीडते विजिगीषते व्यवहरति द्योतते सूयते गच्छतीति देवः । वासुश्चासौ देवश्च **वासुदेवः** ।

> छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
> सर्वभूताधिवासश्च वासुदेवस्ततस्स्मृतः ॥†
> वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः ।
> वासुदेवस्ततो ज्ञेयः‡

इति उद्योगपर्वणि ।

> सर्वत्रासौ समस्त च वसत्यत्रेति वै यतः ।
> ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥§
> सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
> भूतेषु च स सर्वात्मा वासुदेवस्ततस्स्मृतः ॥§

इति च विष्णुपुराणे ।

> बृहन्तो भानवो यस्य चन्द्रसूर्यादिगामिनः ।

तैर्विश्वं भासयति यस्स बृहद्भानुरुच्यते ।

आदिः कारणं स चासौ देवश्चेति **आदिदेवः** । द्योतनादिगुणवान्वा **देवः** । सुरशत्रूणां पुराणा दारणात्सः **पुरन्दरः**, 'वाचंयमपुरन्दरौ च' इति पाणिनिना निपातनात् ॥ ४९ ॥

## अशोकस्तारणस्तारश्शूरश्शौरिर्जनेश्वरः । अनुकूलश्शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ५० ॥

शोकादिषडूर्मिवर्जितः **अशोकः** । संसारसागरात्तारयतीति **तार-**

---

*आप. श्रौ. ५-११-४. †मो. ध. ‡उद्यो. ७०-३. §१-२-१२. ६७५-८०,

णः । गर्भजन्मजरामृत्युलक्षणात् भयात् तारयतीति **तारः** । विक्रमणात् **शूरः** । शूरस्यापत्य वसुदेवस्य सुतः **शौरिः** । जनानां जन्तूनामीश्वरो **जनेश्वरः** । आत्मत्वेन हि सर्वेषा **अनुकूलः** । न हि स्वस्मिन्प्रातिकूल्यं स्वयमाचरति । धर्मत्राणाय शतमावर्तनानि प्रादुर्भावा अस्येति **शतावर्तः** । यद्वा—नाडीशते प्राणरूपेण वर्तत इति वा । पद्मं हस्ते विद्यते इति **पद्मी** । पद्मनिभे ईक्षणे दृशावस्येति **पद्मनिभेक्षणः** ॥ ५० ॥

## पद्मनाभोरविन्दाक्षः पद्मगर्भश्शरीरभृत् ।
## महर्धि ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥५१॥

पद्मस्य नाभेः मध्ये कर्णिकायां स्थित इति **पद्मनाभः** । अरविन्दसदृशे अक्षिणी अस्येति **अरविन्दाक्षः** । पद्मस्य हृदयाख्यस्य मध्ये उपास्यत्वात् **पद्मगर्भः** । पोषयन्नन्नरूपेण प्राणरूपेण वा शरीरिणां शरीराणि धारयन् **शरीरभृत्** । स्वमायया शरीराणि बिभर्तीति वा । महती ऋद्धिर्विभूतिरस्येति **महर्धिः**। प्रपञ्चरूपेण वर्धमानत्वात् **ऋद्धः** । वृद्ध पुरातन आत्मा यस्येति **वृद्धात्मा** । महती अक्षिणी महान्त्यक्षीणि वाऽस्येति **महाक्षः** । गरुडः ध्वजो यस्येति **गरुडध्वजः** ॥ ५१ ॥

## अतुलश्शरभो भीमस्समयज्ञो हविर्हरिः ।
## सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः॥५२॥

तुला उपमानमस्य न विद्यते इति **अतुलः** ।

**न तस्य प्रतिमाऽस्ति यस्य नाम महद्यशः ।***

इति श्रुतेः ।

---

*श्वेता. ४-१९.

**न त्वत्समोस्त्यभ्यधिकः कुतोन्यः ।***

इति स्मृतेश्च । शराः शरीराणि शीर्यमाणत्वात्, तेषु प्रत्यगात्मतया भातीति **शरभः** । बिभेत्यस्मात्सर्वमिति **भीमः**, 'भीमादयोपादाने' इति पाणिनिस्मृतेः । सन्मार्गवर्तिनामभीम इति वा । सृष्टिस्थितिसंहारसमयवित्, षट् समयान् जानातीति वा **समयज्ञः** । सर्वभूतेषु समत्वं यजनमस्येति वा ।

**समत्वमाराधनमच्युतस्य†**

इति प्रह्लादवचनम् । यज्ञेषु हविर्भागं हरतीति **हविर्हरिः**,

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।***

इति भगवद्वचनात् । अथवा—हूयते हविषाऽसाविति हविः, 'अबध्नन्पुरुषं पशुम्'‡ इति श्रुतेः । स्मृतिमात्रेण पापं पुंसां हरतीति, हरितवर्णत्वाद्वा **हरिः** ॥

**हराम्यघं च स्मर्तॄणां हविर्भागं क्रतुष्वहम् ।**
**वर्णश्च मे हरिर्वेति तस्माद्धरिरहं स्मृतः ॥§**

इति व्यासवचनात् । सर्वैर्लक्षणैः प्रमाणैः लक्षणं ज्ञानं जायते यत्तद्विनिर्दिष्टं सर्वलक्षणलक्षणम्, तत्र साधुः **सर्वलक्षणलक्षण्यः**, तस्यैव परमार्थत्वात् । लक्ष्मीरस्य वक्षसि नित्यं वसतीति **लक्ष्मीवान्** । समितिं युद्धं जयतीति **समितिंजयः** ॥९२॥

## विक्षरो रोहितो मार्गो हेतुर्दामोदरस्सहः ।
## महीधरो महाभागो वेगवानमिताशनः ॥ ५३ ॥

विगतः क्षरो नाशो यस्यासौ **विक्षरः** । स्वच्छन्दतया रोहितां मूर्तिं, मत्स्यमूर्तिं वा वहन् **रोहितः** । मुमुक्षवः तं देवं

*भ.गी.११-४३,९-२४. †विष्णुपु.१-१७-९०. ‡तै.आ.३-१२. §शान्ति.३४३-३९.

मार्गयन्ति इति मार्गः । परमानन्दो येन प्राप्यते स मार्ग इति वा । उपादानं निमित्तं च कारणं स एवेति हेतुः । दमादिसाधनेनोदरा उत्कृष्टा मतिर्या तया गम्यत इति दामोदरः ।

दमाद्दामोदरं विदुः ।

इति महाभारते । यशोदया दाम्नोदरबद्ध इति वा ।

तयोर्मध्यगतं बद्धं दाम्ना गाढं तथोदरे ।
ततश्च दामोदरतां स ययौ दामबन्धनात् ॥*

इति ब्रह्मपुराणे ।

दामानि लोकनामानि तानि यस्योदरान्तरे ।
तेन दामोदरो देवः,

इति व्यासवचनाद्वा दामोदरः । सर्वानभिभवति क्षमत इति वा सहः । महीं गिरिरूपेण धत्ते इति महीधरः,

वनानि विष्णुर्गिरयो दिशश्च ।†

इति पराशरोक्तेः । स्वेच्छया धारयन्देहं महान्ति उत्कृष्टानि भोजनानि भागजन्यानि भुङ्क्ते इति महाभागः । महान् भागो भाग्यमस्यावतारेष्विति महाभागः । वेगो जवस्तद्वान् वेगवान्, 'अनेजदेकं मनसो जवीयः'‡ इति श्रुतेः । संहारसमये विश्वमश्नातीति अमिताशनः ॥ ५३ ॥

**उद्भवः क्षोभणो देवश्श्रीगर्भः परमेश्वरः ।**
**करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ५४ ॥**

प्रपञ्चोत्पत्त्युपादानकारणत्वात् उद्भवः । उद्गतो भवात् संसारादिति वा । सर्गकाले प्रकृतिं पुरुषं च क्षोभयामासेति क्षोभणः ।

---

*१८४-४२. †विष्णुपु. २-१२-३८. ‡ईशो. ४.

**प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः।**
**क्षोभयामास भगवान् सर्गकाले व्ययाव्ययौ ॥***

इति विष्णुपुराणे । यतो दीव्यति क्रीडति सर्गादिभिः, विजिगीषते सुरादीन्, व्यवहरति सर्वभूतेषु, आत्मतया द्योतते, स्तूयते स्तुत्यैः, सर्वत्र गच्छति तस्मात् देवः, 'एको देवः'† इति मन्त्रवर्णात् । श्रीर्विभूतिर्यस्योदरान्तरे जगद्रूपा यस्या गर्भे स्थिता स **श्रीगर्भः** । परमश्चासौ ईशनशीलश्चेति **परमेश्वरः**,

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।‡**

इति भगवद्वचनात् । जगदुत्पत्तौ साधकतमं **करणम्** । उपादानं **कारणम्** । निमित्तं च **कर्ता** स्वतन्त्रः । विचित्रं भुवनं कृतवानिति **विकर्ता** । स्वरूपं सामर्थ्यं चेष्टितं वा तस्य ज्ञातुं न शक्यत इति **गहनः** । गूहते संवृणोति स्वरूपादीनि माययेति **गुहः** ॥ ५४ ॥

## व्यवसायो व्यवस्थानस्संस्थानस्स्थानदो ध्रुवः ।
## परर्धिः परमस्पष्टस्तुष्टः पुष्टश्शुभेक्षणः ॥ ५५ ॥

संविन्मात्रस्वरूपत्वात् **व्यवसायः** । अस्मिन्व्यवस्थितिः सर्वस्येति **व्यवस्थानः** । लोकपालाद्यधिकारजरायुजाण्डजोद्भिज्जब्राह्मणक्षत्रियवैश्यशूद्रावान्तरवर्ण ब्रह्मचारि गृहस्थ वानप्रस्थ संन्यासलक्षणाश्रमतद्धर्मादिकान् विभज्य करोतीति वा **व्यवस्थानः** । अत्र भूतानां संस्थितिः प्रलयात्मिका, समीचीनं स्थानमस्येति वा **संस्थानः** । ध्रुवादीनां कर्मानुरूपं स्थानं ददातीति **स्थानदः** । अविनाशित्वात् **ध्रुवः** । परा ऋद्धिर्विभूतिरस्येति **परर्धिः** ।

---

*१-२-२९. †श्वेता. ६-११. ‡१३-२७.

अनन्याधीनसिद्धित्वात्संविदात्मतया **परमस्पष्टः** । परमानन्दैकरूपत्वात् **तुष्टः** । सर्वसंपूर्णत्वात् **पुष्टः** । ईक्षणं दर्शनं यस्य शुभं शुभकरं मुमुक्षूणां मोक्षदं भोगार्थिनां भोगदं सर्वसन्देहविच्छेदकारणं हृदयग्रन्थेर्विच्छेदकरं सर्वकर्मणां क्षपणं अविद्यायाश्च निवर्तकं स **शुभेक्षणः** ।

**भिद्यते हृदयग्रन्थिः ।***

इत्यादिश्रुतेः ॥ ९९ ॥

## रामो विरामो विरजो† मार्गो नेयो नयोऽनयः ।
## वीरश्शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ५६ ॥

नित्यानन्दलक्षणेऽस्मिन् योगिनो रमन्त इति **रामः** ।

**रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि ।**
**इति रामपदेनैतत्परं ब्रह्माऽभिधीयते ॥‡**

इति पद्मपुराणे । स्वेच्छया रमणीयं वपुर्वहन्वा दाशरथी **रामः** । विरामोऽवसानं प्राणिनामस्मिन्निति **विरामः** । विगतं रजो यस्य विषयसेवायामिति **विरजः** । यं विदित्वाऽमृतत्वाय कल्पन्ते मुमुक्षवः स एव पन्था **मार्गः**, 'नान्यः पन्था विद्यतेऽयनाय'§ इति श्रुतेः । मार्गेण सम्यग्ज्ञानेन जीवः परमात्मतया नीयत इति **नेयः** । नयतीति **नयः** नेता । मार्गो नेयो नयः इति त्रिरूपः परिकल्प्यते । नास्य नेता विद्यते इति **अनयः** ।

## इति नाम्नां चतुर्थशतकम्.

विक्रमशालित्वात् **वीरः** । शक्तिमतां विरिञ्च्यादीनामपि शक्तिमत्त्वात् **शक्तिमतां श्रेष्ठः** । सर्वभूतानां धारणात् **धर्मः**, 'अणुरेष

*मु. २-८. †विरतः इति पाठान्तरम्. ‡शब्दकल्पद्रुमे रामशब्दे (१५०) पृष्ठ. §तै. आ. ३-१३.

धर्मः'* इति श्रुतेः । धर्मैराराध्यत इति वा । श्रुतयः स्मृतयश्च यस्याज्ञाभूताः स एव सर्वधर्मविदामुत्तमः इति **धर्मविदुत्तमः** ॥ ९६ ॥

## वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
## हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ५७ ॥

विविधा कुण्ठा गतेः प्रतिहतिः विकुण्ठा, विकुण्ठायाः कर्तेति **वैकुण्ठः**, जगदारम्भे विश्लिष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिं प्रतिबध्नातीति ।

**मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना ।**
**वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम ॥†**

इति शान्तिपर्वणि ।

'सयत्पूर्वोस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुषः'‡ इति श्रुतेः **पुरुषः** । पुरि शयनाद्वा **पुरुषः** । 'स वा अयं पुरुषस्सर्वासु पूर्षु पुरि शयः'‡ इति श्रुतेः । प्राणिति क्षेत्रज्ञरूपेण प्राणात्मना चेष्टयन्वा **प्राणः** । 'चेष्टां करोति श्वसनरूपेण' इति विष्णुपुराणे । खण्डयति प्राणिना प्राणान् प्रलयादिष्विति **प्राणदः** । प्रणौतीति **प्रणवः**, 'तस्मादोमिति प्रणौति' इति श्रुतेः । प्रणम्यते इति वा **प्रणवः**,

**प्रणमन्तीह यं वेदास्तस्मात्प्रणव उच्यते ।**

इति सनत्कुमारवचनात् । प्रपञ्चरूपेण विस्तृतत्वात् **पृथुः** । हिरण्य-गर्भसम्भूतिकारणं हिरण्मयमण्डं यद्वीर्यसम्भूतं तदस्य गर्भ इति **हिरण्यगर्भः** । त्रिदशशत्रून्हन्तीति **शत्रुघ्नः** । कारणत्वेन सर्वकार्याणां व्याप्तत्वात् **व्याप्तः** । वाति गन्धं करोतीति **वायुः** ।

---

*कठ. १-२१. †१४३-५१. ‡बृह. ३-४-१. ४-५-१८.

**पुण्यो गन्धः पृथिव्यां च** *

इति भगवद्वचनात् ।

**अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ।**†

इति उद्योगपर्वणि । द्यौरक्षं, पृथिवी चाधः, तयोर्यस्मादजायत मध्ये वैराजरूपेण इति वा **अधोक्षजः** ॥ ५७ ॥

## ऋतुस्सुदर्शनः कालः परमेष्ठी परिग्रहः ।
## उग्रस्संवत्सरो दक्षो विश्रामो विश्वदक्षिणः॥ ५८ ॥

कालात्मना ऋतुशब्देन लक्ष्यत इति **ऋतुः** । शोभनं निर्वाणफलं दर्शनं ज्ञानमस्येति, शुभे दर्शने ईक्षणे पद्मपत्रायते अस्येति, सुखेन दृश्यते भक्तैरिति वा **सुदर्शनः** । कलयति सर्वमिति **कालः**,

**कालः कलयतामहम्** ।*

इति भगवद्वचनात् । परमे प्रकृष्टे स्वे महिम्नि हृदयाकाशे स्थातुं शीलमस्येति **परमेष्ठी**, 'परमेष्ठी विभाजः'‡ इति मन्त्रवर्णात् । शरणार्थिभिः परितो गृह्यते सर्वगतत्वात्, परितो ज्ञायते इति वा, पत्रपुष्पादिकं भक्तैरर्पितं परिगृह्णातीति वा **परिग्रहः** । सूर्यादीनामपि भयहेतुत्वात् **उग्रः**, 'भीषोदेति सूर्यः'§ इति श्रुतेः । संवसन्ति भूतान्यस्मिन्निति **संवत्सरः** । जगद्रूपेण वर्धमानत्वात् सर्वकर्माणि क्षिप्रं करोतीति वा **दक्षः** । संसारसागरे क्षुत्पिपासादिषडूर्मिभिस्तरङ्गितैः अविद्याद्यैर्महाक्लेशैः म-

---

*७-९, १०-३०. †७१-१०. ‡आप.ध. १-२३-२. §तै.उ.२-७.

द्वादिभिरुपक्लेशैश्च वशीकृतानां विश्रान्तिं काङ्क्षमाणानां विश्रामं मोक्षं करोतीति **विश्रामः** । विश्वस्मात् दक्षिणः शक्तो, विश्वेषु कर्मसु दाक्षिण्याद्वा **विश्वदक्षिणः** ॥ ५८ ॥

**विस्तारस्स्थावरस्स्थाणुः प्रमाणं बीजमव्ययम् ।**
**अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥५९॥**

विस्तीर्यन्ते समस्तानि जगन्त्यस्मिन्निति **विस्तारः** । स्थितिशीलत्वात् **स्थावरः** । स्थितिशीलानि पृथिव्यादीनि तिष्ठन्त्यस्मिन्निति **स्थाणुः** । स्थावरश्चासौ स्थाणुश्च **स्थावरस्थाणुः** । संविदात्मना **प्रमाणम्** । अन्यथाभावव्यतिरेकेण कारणमिति **बीजमव्ययम्** । सुखरूपत्वात्सर्वैरर्थ्यत इति **अर्थः** । न विद्यते प्रयोजनं आप्तकामत्वात् अस्येति **अनर्थः** । महान्तः कोशा अन्नमयादयः छादका अस्येति **महाकोशः** । महान् भोगः सुखरूपोस्येति **महाभोगः** । महद्भोगसाधनलक्षणं धनमस्येति **महाधनः** ॥ ५९ ॥

**अनिर्विण्णस्स्थविष्ठोभूर्धर्मयूपो महामखः ।**
**नक्षत्रनेमिर्नक्षत्री क्षमः क्षामस्समीहनः ॥ ६० ॥**

आप्तकामत्वात् निर्वेदोस्य न विद्यत इति **अनिर्विण्णः** । वैराजरूपेण स्थितः **स्थविष्ठः**, ‘ अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ ’* इति श्रुतेः । अजन्मा **अभूः** । अथवा ‘ भू सत्तायां ’ इत्यस्य सम्पदादित्वात् क्विप् । मही वा । यूपे पशुवत् तत्समाराधनात्मका

---

*मु. २-४.

धर्मास्तत्र बध्यन्त इति **धर्मयूपः** । यस्मिन्नर्पिता मखा यज्ञा निर्वाणलक्षणं प्रयच्छन्तो महान्तो जायन्ते स **महामखः** ।

**नक्षत्रतारकैस्सार्धं चन्द्रसूर्यादयो ग्रहाः ।**
**वायुपाशमयैर्बन्धैर्निबद्धा ध्रुवसंज्ञिते ॥**

स ज्योतिषां चक्रं भ्रामयंस्तारामयस्य शिशुमारस्य पुच्छदेशे व्यवस्थितो ध्रुवः । तस्य शिशुमारस्य हृदये ज्योतिश्चक्रस्य नेमिवत्प्रवर्तकः स्थितो विष्णुरिति **नक्षत्रनेमिः** । शिशुमारवर्णने 'विष्णु हृदयम्'* इति स्वाध्यायब्राह्मणे श्रूयते । चन्द्ररूपेण **नक्षत्री,**

**नक्षत्राणामहं शशी ।**†

इति भगवद्वचनात् । समस्तकार्येषु समर्थ, क्षमत इति वा **क्षमः** ।

**क्षमया पृथिवीसम ।**‡

इति वाल्मीकिवचनात् । सर्वभूतेषु स्वात्मनाऽवस्थित इति **क्षामः** । सृष्ट्याद्यर्थे सम्यगीहत इति **समीहनः** ॥ ६० ॥

# यज्ञ इज्यो महेज्यश्च क्रतुस्सत्त्रं सतां गतिः ।
# सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ६१ ॥

सर्वयज्ञस्वरूपत्वात् **यज्ञः** । सर्वेषां देवानां तुष्टिकारको यज्ञाकारेण प्रवर्तत इति वा, 'यज्ञो वै विष्णुः'§ इति श्रुतेः । यष्टव्योऽप्ययमेवेति **इज्यः** ।

**ये यजन्ति मखैः पुण्यैः देवतादीन् पितॄनपि ।**
**आत्मानमात्मना नित्यं विष्णुमेव यजन्ति ते ॥**

इति हरिवंशे । सर्वासु देवतासु यष्टव्यासु प्रकर्षेण यष्टव्यो मोक्षफलदातृत्वादिति **महेज्यः** । यूपसहितो यज्ञः **क्रतुः** । आसीनोपैतिचोदनालक्षणं, **सत्त्रम्** । सतस्त्रायत इति वा । सतां

---

*तै. आ. २-१९. †१०-२१. ‡बाल. १-१८. §तै. स. २-५-५.

मुमुक्षूणां नान्या गतिरिति सतां गतिः । सर्वेषां प्राणिनां कृताकृतं सर्वं पश्यति स्वाभाविकेन बोधेनेति **सर्वदर्शी** । स्वभावेन विमुक्त आत्मा यस्येति, विमुक्तश्चासावात्मा चेति वा **विमुक्तात्मा,** 'विमुक्तश्च विमुच्यते '* इति श्रुतेः । सर्वश्चासौ ज्ञश्चेति **सर्वज्ञः,** 'इदं सर्वं यदयमात्मा '† इति श्रुतेः । ज्ञानमुत्तममित्येतत्सविशेषणमेकं नाम ; ज्ञानं प्रकृष्टमजन्यं अनवच्छिन्नं सर्वस्य साधकतममिति **ज्ञानमुत्तमं** ब्रह्म, 'सत्यं ज्ञानमनन्तं ब्रह्म '‡ इति श्रुतेः ॥ ६१ ॥

**सुव्रतस्सुमुखस्सूक्ष्मस्सुघोषस्सुखदस्सुहृत् ।**
**मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ६२ ॥**

शोभनं व्रतमस्येति सुव्रतः ।

**सकृदेव प्रपन्नाय तवास्मीति च याचते ।**
**अभयं सर्वथा तस्मै ददाम्येतद्व्रतं मम ॥§**

इति श्रीरामायणे रामवचनम् । शोभनं मुखमस्येति **सुमुखः** ।

**प्रसन्नवदनं चारु पद्मपत्रायतेक्षणम् ।¶**

इति श्रीविष्णुपुराणे । वनवाससुमुखत्वाद्वा दाशरथी रामः सुमुखः ।

**स्वपितुर्वचनं श्रीमानभिषेकात्परं प्रियम् ।**
**मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ॥**
**इमानि तु महारण्ये विहृत्य नव पञ्च च ।**
**वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥**
**न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ।**
**सर्वलोकातिगस्येव मनो रामस्य विव्यथे ॥****

*कठ. ५-१. †बृह. ६-५-७. ‡ तै.उ.२-१.
§. १८-३३. ¶६-७-८०. **अयो. १९-३३.

इति रामायणे भारते च । सर्वविद्योपदेशेन वा सुमुखः, 'यो ब्रह्माणं '* इत्यादिश्रुतेः । शब्दादिस्थूलकारणरहितत्वात्—शब्दादयो ह्याकाशादीनामुत्तरोत्तरस्थूलत्वकारणानि, तदभावात्—**सूक्ष्मः**, 'सर्वगतं सुसूक्ष्मम् '† इति श्रुतेः । शोभनो घोषो वेदात्मकोऽस्येति, मेघगम्भीरघोषत्वाद्वा **सुघोषः** । सद्वृत्तानां सुखं ददाति, असद्वृत्तानां सुखं द्यति खण्डयतीति वा **सुखदः** । प्रत्युपकारनिरपेक्षतयोपकारित्वात् **सुहृत्** । निरतिशयानन्दरूपत्वात् मनो हरतीति **मनोहरः** । जितः क्रोधो येन सः **जितक्रोधः**; वेदमर्यादास्थापनार्थं सुरारीन् हन्ति न तु कोपवशादिति । त्रिदशशत्रून्निघ्नन्वेदमर्यादां स्थापयन् विक्रमशाली बाहुरस्येति **वीरबाहुः** । अधार्मिकान् विदारयतीति **विदारणः** ॥ ६२ ॥

**स्वापनस्स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।**
**वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ६३ ॥**

प्राणिनः स्वीयान् आत्मसम्बोधविधुरान् मायया कुर्वन् **स्वापनः** । स्वतन्त्रः **स्ववशः**, जगदुत्पत्तिस्थितिलयहेतुत्वात् । आकाशवत्सर्वगतत्वात् **व्यापी**, 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेः । (कारणत्वेन सर्वकार्याणां व्यापनाद्वा व्यापी) । जगदुत्पत्त्यादिषु आविर्भूतनिमित्तशक्तिभिर्विभूतिभिरनेकधा तिष्ठन् **नैकात्मा** । जगदुत्पत्तिसंपत्तिविपत्तिप्रभृतिकर्माणि करोतीति **नैककर्मकृत्** । वसत्यत्राखिलमिति **वत्सरः** । भक्तस्नेहित्वात् **वत्सलः** । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । वत्सानां पालनात् **वत्सी** । जगत्पितुस्तस्य वत्सभूताः प्रजा इति वा **वत्सी** ।

---

*श्वे. ६-१८. †मु. १-६.

रत्नानि गर्भभूतानि अस्येति समुद्रः **रत्नगर्भः** । धनानामीश्वरः **धनेश्वरः** ॥ ६३ ॥

**धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।**
**अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः॥ ६४ ॥**

धर्मं गोपायतीति **धर्मगुप्** ,

**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।***

इति भगवद्वचनात् । धर्माधर्मविहीनोपि धर्ममर्यादास्थापनार्थं धर्ममेव करोतीति **धर्मकृत्** । धर्मान् धारयतीति† **धर्मी** । अवितथं परं ब्रह्म **सत्** , 'सदेव सोम्येदम्'‡ इति श्रुतेः । अपरं ब्रह्म **असत्** , 'वाचारम्भणं विकारो नामधेयम्'‡ इति श्रुतेः । सर्वाणि भूतानि **क्षरम्** । कूटस्थः **अक्षरम्** ।

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥**§

इति भगवद्वचनात् । आत्मनि कर्तृत्वादिविकल्पविज्ञानं कल्पितमिति तद्वासनावकुण्ठितो जीवो विज्ञाता, तद्विलक्षणो विष्णुः **अविज्ञाता** । आदित्यादिगता अंशवोस्येत्ययमेव मुख्यः **सहस्रांशुः**,

**येन सूर्यस्तपति तेजसेद्धः ।**¶

इति श्रुतेः,

**यदादित्यगतं तेजः ।****

---

*४-८. †'धर्माचारतया' 'धर्माधारतया' इत्यपि पाठौ. ‡छा. ६-२. §१५-१६. ¶तै. ब्रा. ३-१२-९. **१५-१२.

इति **स्मृतेश्च** । विशेषेण शेषदिग्गजभूधरान् सर्वभूतानां धातॄन् दधातीति **विधाता** । नित्यनिष्पन्नचैतन्यरूपत्वात् **कृतलक्षणः** । कृतानि लक्षणानि शास्त्राण्यनेनेति वा ।

**वेदाश्शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ।**

इत्यत्रैव वक्ष्यति । सजातीयविजातीयव्यवच्छेदकं लक्षणं सर्वभावानां कृतमनेनेति वा । आत्मनः श्रीवत्सलक्षणं वक्षसि तेन कृतमिति वा **कृतलक्षणः** ॥ ६४ ॥

## गभस्तिनेमिस्सत्त्वस्थस्सिंहो भूतमहेश्वरः ।
## आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ६५ ॥

गभस्तिचक्रस्य मध्ये सूर्यात्मना स्थित इति **गभस्तिनेमिः** । सत्त्व गुणं प्रकाशक प्राधान्येनाधितिष्ठतीति, सर्वप्राणिषु तिष्ठतीति वा **सत्त्वस्थः** । विक्रमशालित्वात्सिंहवत् **सिंहः** । नृशब्दलोपेन 'सत्यभामा भामा' इतिवद्वा सिंहः । भूतानां महानीश्वरो, भूतेन सत्येन स एव परमो महानीश्वर इति वा **भूतमहेश्वरः** । सर्वभूतान्यादीयन्तेऽनेनेति आदिः, आदिश्चासौ देवश्चेति **आदिदेवः** । सर्वान्भावान्परित्यज्य आत्मज्ञानयोगैश्वर्ये महति महीयते, तस्मादुच्यते **महादेवः** । प्राधान्येन देवानामीशो **देवेशः** । देवान् बिभर्तीति देवभृत् शक्रः, तस्यापि शासितेति **देवभृद्गुरुः** । देवानां भरणात्, सर्वविद्यानां च निगरणाद्वा देवभृद्गुरुः ॥ ६९ ॥

## उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
## शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ६६ ॥

जन्मसंसारादुत्तरतीति उत्तरः । सर्वोत्कृष्ट इति वा,

विश्वस्मादिन्द्र उत्तरः ।*

इति श्रुतेः । गवां पालनाद्गोपवेषधरो **गोपतिः** । गौर्मही, तस्याः पतित्वाद्वा । समस्तभूतानि पालयन् रक्षको जगतः इति **गोप्ता** । न कर्मणा न ज्ञानकर्मभ्यां वा गम्यते, किन्तु ज्ञानेन गम्यते इति **ज्ञानगम्यः** । कालेनापरिच्छिन्नत्वात् पुरा भवतीति **पुरातनः** । शरीरारम्भकभूतानां भरणात् प्राणरूपधरः **शरीरभूतभृत्** । पालकत्वात् **भोक्ता** । परमानन्दसन्दोहसम्भोगाद्वा भोक्ता ।

## इति नाम्नां पञ्चमं शतं विवृतम्.

कपिश्चासाविन्द्रश्चेति कपिर्वराहः, वाराहं वपुरास्थितः **कपीन्द्रः** । कपीनां वानराणामिन्द्रः **कपीन्द्रः** राघवो वा । भूरयो बह्वयः यज्ञदक्षिणाः धर्ममर्यादां दर्शयतो यज्ञं कुर्वतो विद्यन्त इति **भूरिदक्षिणः** ॥ ६६ ॥

**सोमपोऽमृतपस्सोमः पुरुजित्पुरुसत्तमः ।**
**विनयो जयस्सत्यसन्धो दाशार्हस्सात्वतांपतिः॥६७**

सोमं पिबति सर्वयज्ञेषु यष्टव्यदेवतारूपेणेति **सोमपः** । धर्ममर्यादां दर्शयन्यजमानरूपेण वा सोमपः । स्वात्मामृतरसं पिबन् **अमृतपः** । असुरैः ह्रीयमाणममृतं रक्षित्वा देवान् पाययित्वा स्वयमप्यपिबदिति वा । सोमरूपेणौषधीः पोषयन् **सोमः** । उमया सहितः शिवो वा† । पुरून् बहून् जयतीति **पुरुजित्** । विश्वरूपत्वात् पुरुः, उत्कृष्टत्वात् सत्तमः, पुरुश्चासौ सत्तमश्चेति

---

*ऋक्सं. १०-८६-१. †' सहितो वा ' इत्यपि पाठः.

अखिलं कर्म दग्ध्वाऽन्यैर्विष्ण्वाख्यममृतं शुभम् ।
प्राप्नोति सर्वसिद्धार्थमिति वेदानुशासनम् ॥[1]

इति । तथाहि भगवान्परमगुरुः पराशरः आत्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं दर्शयति—

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥

ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥

ये तु ज्ञानविदश्शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥

ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥

यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥

वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तस्य कुतो हि तत्त्वम् ॥

मही घटत्वं घटतः कपालिका
कपालिका चूर्णरजस्ततोऽणुः ।
जनैस्स्वकर्मस्तिमितात्मनिश्चयै-
रालक्ष्यते ब्रूहि किमत्र वस्तु ॥

तस्मान्न विज्ञानमृतेऽस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥

ज्ञानं विशुद्धं विमलं विशोकमशेषदोषादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशस्स वासुदेवो न यतोऽन्यदस्ति ॥

सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत्संव्यवहारभूतमत्रापि चोक्तं भुवनाश्रयं ते ॥*

---

[1] आश्वमेधिके अनुगीतासु एते श्लोका नाधुनोपलभ्यन्ते.

*विष्णुपु. १-२-६. ४-४१, ४२. २-१२-३९,-४५.

परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ।
एको व्यापी समश्शुद्धो निर्गुणः प्रकृतेः परः ॥
जन्मवृद्ध्यादिरहितो ह्यात्मा सर्वगतोऽव्ययः ।
परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः ॥
न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यति ।
तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत् ॥
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ।*
तदेतदुपदिष्टं ते संक्षेपेण महामते ॥
परमार्थसारभूतं यत्तदद्वैतमशेषतः ।
सितनीलादिभेदेन यथैकं दृश्यते नभः ॥
भ्रान्तिदृष्टिभिरात्माऽपि तथैकस्सन् पृथक्कृतः ॥
एकस्समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ।
स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप ॥*
ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥*
विस्तारस्सर्वभूतस्य विष्णोर्विश्वमिदं जगत् ।
द्रष्टव्यमात्मनस्तस्मादभेदेन विचक्षणैः ॥
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥
तद्भावभावमापन्नस्तदाऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥*
ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते ।
ज्ञानात्मकमिदं सर्वं न ज्ञानाद्विद्यते परम् ॥
विद्याविद्ये च मैत्रेय ज्ञानमेवोपधारय ॥

---

*विष्णुपु. २-१४-२८, ३१. १६-१८-२२, २४. १२-३८. ६-७-९४, ९३.

इति । तथा चैतत्सर्वं स्पष्टमाह भगवान् सनत्सुजात. ब्रह्माण्ड पुराणे कावषेयगीताप्रसङ्गे—

वेदान्पठध्वं विधिवद्व्रतानि कृत्वा विवाहं च मखैर्यजध्वम् ।
उत्पाद्य पुत्रान्वयसो विरामे देहं त्यजध्वं नियतास्तपोभिः॥इति
किमद्य नश्चाध्ययेन कार्यं किमर्थवन्तश्च मखैर्यजामः ।
प्राणं हि वाऽप्यनले जोहवीमः प्राणानले जोहवीमीति वाचम् ॥

इति कृतकृत्यत्वेन यज्ञाद्यनुष्ठानेन आत्मनः प्रयोजनाभावं दर्शयित्वा

स्वर्गात्तु वेश्यागृहसन्निवेशात्पुण्यक्षयान्ते पतनं स्यादवश्यम् ।
मनुष्यलोके विजरा विदुःखं ... .. . . ॥

इति यज्ञादिसाध्यस्य लोकस्यानित्यत्वादिदोषदुष्टत्वेन हेयत्वं दर्शयित्वा यजुर्वेदोपनिषदि 'सत्यं पर परम्'* इत्यारभ्य सत्यादीनां माहात्म्यं दर्शयित्वा 'न्यास'*इत्यारभ्य 'तानि वा एतान्यवराणि तपाꣳसि न्यास एवात्यरेचयत्'*इत्यन्तेन नित्यसिद्धनिरतिशयानन्द-ब्रह्मप्राप्तिसाधनस्य तत्साधनत्वेन अपराद्नित्यफलसाधनाद्यज्ञादेः सर्वस्मादुत्कृष्टत्व संन्यासस्योक्तं तत्रैव श्रूयते—

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ।
वेदान्तविज्ञानसुनिश्चितार्थास्संन्यासयोगाद्यतयश्शुद्धसत्त्वा ।
ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥†

इति । तथाच बृहदारण्यके सर्वकर्मसंन्यासं दर्शयति—'एतं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति'‡ इति । तथा च भगवान्वासुदेवः सर्वकर्मसंन्यासं दर्शयति—

---

*याज्ञिक्यु. ७८. †याज्ञिक्यु. १२. ‡५-५-१.

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥*
अनपेक्षश्शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तस्स मे प्रियः ॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यस्स मे प्रियः ॥*
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतस्स उच्यते ॥*
असक्तबुद्धिस्सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥*
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥*

इति । तथाचानुगीतासु कर्मणि प्रयोजनाभावं दर्शयति भगवान्—

नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी ।
यस्स्यादेकासने लीनस्तूष्णीं किञ्चिदचिन्तयन् ॥†

इति ।

प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥†

इति । तथा च शान्तिपर्वणि शुकं प्रत्युपदिष्टवान् भगवान्व्यासः—

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥‡
एषा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयम् ।
एषा पूर्वतरैस्सद्भिराचीर्णा परमर्षिभिः ॥‡

---

*भग. ४-२१. १२-१६, १७. १४-२५. १८-४९, ६६.
†आश्वमे—१९अध्याये पादत्रयं विशकलितं दृश्यते. ४३-२६.
‡२४१-७, २४२-५.

प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ।
तद्भावानेवमभ्यस्य वर्ततां श्रूयतां तथा ॥*

इति । तथा च सर्वकर्मसंन्यासं दर्शयति भगवान्नारदः—

संन्यस्य सर्वकर्माणि संन्यस्य विपुलं तपः ।
संन्यस्य विविधा विद्यास्सर्वं संन्यस्य चैव हि ॥
शक्यं त्वेकेन मुक्तेन कृतकृत्येन सर्वशः ।
पिण्डमात्रमुपाश्रित्य चरितुं सर्वतो दिशम् ॥
हित्वा गुणमयं पाशं कर्म हित्वा शुभाशुभम् ।
उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः ॥
परिग्रहं परित्यज्य भव तात जितेन्द्रियः ।
अशोकस्थानमातिष्ठ इह चामुत्र चाभयम् ॥

इति । तथा च सर्वकर्मसंन्यासिन एव ज्ञाने अधिकारः नेतरस्येत्याह भगवान्बृहस्पतिः—

प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतैस्सुखी ।
रागवान् प्रकृतिं ह्येति विरक्तो ज्ञानमाप्नुयात् ॥*

इति । तथा चाश्वमेधिके ब्रह्मणा सम्यगुक्तं मुनीन्प्रति सर्वाश्रमिणां सर्वकर्मसंन्यासे अधिकार इति—

गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ वा पुनः ।
य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत् ॥†

इति ।

एतत्तु ब्राह्मणं वृत्तमाहुरेकपदं सुखम् ।
एषा गतिर्विरक्तानामेव धर्मस्सनातनः ॥

इति । यस्मादेवं तस्माद्विविदुषोर्मुमुक्षोश्च सर्वकर्मसंन्यास एवाधिकारः ॥ २० ॥

---

*शान्तिप २४५-४. २०४-९. पूर्वार्धमात्रं दृश्यते.

†आश्वमे, ४६-१७. ५१-३९. उत्तरार्धमात्रं दृश्यते.

एवं तावदेकस्यैव परमात्मनोऽनादिमायायोगेन बहुरूपत्वमुक्तम् । इदानीं यदीश्वरस्य जगत्कारणत्वं तदपि मायोपाधिकमित्याह—

**यदेतदद्धा भगवान् स नित्यं**
**विकारयोगेन करोति विश्वम् ।**
**तथा च तच्छक्तिरिति स्म मन्ये**
**तदर्थ*योगे च भवन्ति वेदाः ॥ २१ ॥**

यदेतत् **अद्धा** परमार्थभूतो **भगवान्** ऐश्वर्यादिसमन्वितः **सः** परमेश्वरो **नित्यं विकारयोगेन** ईक्षणादिपूर्वकं **विश्वं करोति** इति तत्सर्वं **तथा तच्छक्तिः** परमात्मनश्शक्तिः मायैव करोति न परमात्मा अपूर्वादिलक्षणः **इति स्म मन्ये** । न स्वतः चिदानन्दाद्वितीयस्य कारणत्वं, किन्तु मायावेशवशादित्यर्थः । किं तर्ह्यस्य तथाभूतशक्तियोगे प्रमाणमिति चेत् तत्राह—**तदर्थ*योगे** तस्य परमात्मनो जगदुपादानभूतमायार्थयोगे **च भवन्ति वेदाः** । तस्य मायासद्भावे वेदाः प्रमाणं भवन्तीत्यर्थः । तथा च श्रुतिः—

**इन्द्रो मायाभिः पुरुरूप ईयते ।**†
**अस्मान्मायी सृजते विश्वमेतत् ।**‡
**मायिनं तु महेश्वरम् ।**‡
**देवात्मशक्तिं स्वगुणैर्निगूढाम् ।**‡ इति ॥

तथा चाह भगवान्वासुदेवः—

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**§
**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥**§
**मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम् ॥**§

---

*तथाऽर्थ. †बृ. ४-५-१९. ‡श्वेताश्व. ४-९-१०, १-३.
§भगवद्गी. ७-१४, ४-६, ९-१०.

इति । तथा च—

माया तवेयमज्ञातपदार्थानतिमोहिनी ।
अनात्मन्यात्मविज्ञानं यया मूढोधिरोहति ॥
इयमस्य जगद्धातुर्माया कृष्णस्य गह्वरी ।
धार्यधारकभेदेन यया सम्पीडितं जगत् ॥
अहो स्म दुस्तरा विष्णोर्मायेयमतिगह्वरी ।
यया मोहितचित्तस्तु न वेत्ति परमेश्वरम् ॥

इति ॥ २१ ॥

एवं तावत् ‘ प्रमादं वै मृत्युमहं ब्रवीमि ’ इत्यादिना मृत्योस्स्वरूपं तस्य कार्यात्मनाऽवस्थान तन्निमित्तं चानेकानर्थं* दर्शयित्वा केन तर्ह्यस्य विनाश ? इत्याशङ्क्य

एवं मृत्युं जायमानं विदित्वा ज्ञानेन तिष्ठन्न बिभेति मृत्योः ।

इत्यादिना आत्मज्ञानादेवाभयप्राप्ति दर्शिता श्रुत्वा प्रासङ्गिके चोद्यद्वये परिहृते कर्मस्वरूपवि†ज्ञानाय प्राह धृतराष्ट्र.—

## धृतराष्ट्र उवाच—

यस्माद्धर्मानाचरन्तीह केचि-
त्तथाऽधर्मान् केचिदिहाचरन्ति ।
धर्मः पापेन प्रतिहन्यते वा
उताहो धर्मः प्रतिहन्ति पापम् ॥ २२ ॥

**यस्माद्धर्मान्** अग्निहोत्रादीन् **आचरन्ति इह** लोके **केचित्** । **तथा अधर्मानिहाचरन्ति** । किं तेषां **धर्मः पापेन प्रतिहन्यते वा** ? **उताहो** स्वित् **धर्मः प्रतिहन्ति पापं** ? अथवा तुल्यबलत्वेनान्यतरेण अन्यतरस्यापि नाशः ? इति ॥ २२ ॥

---

*चानेकार्थं इत्यपि पाठः. †कर्मस्वभावपरि इत्यपि पाठः.

अविदुष उभयोरनुभव एव, नान्यतरेणान्यतरस्य नाशः। विदुषः पुनरुभयोरपि ज्ञानाग्निना नाश इत्युत्तरमाह—

**सनत्सुजात उवाच—**

एवं पृष्टः प्राह भगवान् सनत्सुजातः।

**तस्मिन् स्थितो वाऽप्युभयं हि नित्यं**
**ज्ञानेन विद्वान् प्रतिहन्ति सिद्धम्।**
**अथान्यथा पुण्यमुपैति देही**
**तथागतं पापमुपैति सिद्धम् ॥ २३ ॥**

**तस्मिन्** पुण्यापुण्यात्मके कर्मणि **स्थितोऽपि** कुर्वन्नपि **उभयं** पुण्यापुण्यलक्षणं कर्म **नित्यं** नियमेन **विद्वान् ज्ञानेन प्रतिहन्ति** विनाशयति। कथमेतदवगम्यते ज्ञानेन **विद्वान्प्रतिहन्तीति**? तत्राह—**सिद्धं** प्रसिद्धं ह्येतच्छ्रुतिस्मृतीतिहासपुराणेषु। तथा च श्रुतिः—'भिद्यते हृदयग्रन्थिः'[1] इत्यादि, 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते'[2] इति, 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते'[3] इति 'तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'[4] इति। 'अश्व इव रोमाणि विधूय पापम्'[5] इति।

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।**[6]

इति। **अथान्यथा** ज्ञानविहीनश्चेत् **पुण्यमुपैति देही तथागतं पापमुपैति** तत्फलं चोपभुङ्क्ते। कथमेतदवगम्यत इति चेत्?

[1] मु. २-२-८. [2] छा. ४-१४-३. [3] छा. ५-२४-३.
[4] मु. ३-१-३. [5] छा. ८-१३-१. [6] गी. ४-३७.

तत्राह—**सिद्धं** प्रसिद्धं ह्येतदपि श्रुतिस्मृतीतिहासपुराणादिषु । तथा च श्रुतिः—

**इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।**
**नाकस्य पृष्ठे सुकृतेन भूत्वेमं लोकं पुनरेवाविशन्ति ॥**[1] इति ।
अनन्दा नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः[2] ॥ इति ॥

तथैव वासुदेवः—'त्रैविद्या मां'[3] इति ।

ते तं भुक्त्वा स्वर्गलोकं विशालम् ।[4]

इति च ॥ २३ ॥

किमविदुषः अनुभव एवोभयोः ? उतान्यतरेणान्यतरनाश इति? तत्राह—

**गत्वोभयं कर्मणा भुज्यतेऽस्थिरं**
**शुभस्य पापस्य स चापि कर्मणा ।**
**धर्मेण पापं प्रणुदतीह विद्वान्**
**धर्मो बलीयानिति तस्य विद्धि ॥२४॥**

**गत्वा** परलोकं प्राप्य **उभयं** पुण्यापुण्यसाध्यं फलं पुण्यापुण्यलक्षणेन **कर्मणा भुज्यते अस्थिरम्** । श्रूयते च बृहदारण्यके—'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति'[5] इति । 'अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति'[6] इति छान्दोग्ये॥ **स चापि** सोपि विद्वान् **कर्मणा धर्मेण पापं प्रणुदति** विनाशयति **इह** लोके **विद्वान्** वक्ष्यमाणलक्षणो विनियोगज्ञ ईश्वरार्थं कर्मानुतिष्ठन् । तथाच वक्ष्यति—

---

[1] मु. १-२-१०. [2] बृ. ६-४-११. [3] गी. ९-२०.
[4] गी. ९-२१. [5] बृ. ५-८-१०. [6] छा. ७-२५-२.

**तदर्थमुक्तं 'तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान्।**
**पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मा ॥**
**ज्ञानेन चात्मानमुपैति विद्वानथान्यथा स्वर्गफलानुकांक्षी ।**
**अस्मिन्कृतं तत्परिगृह्य सर्वममुत्र भुङ्क्ते पुनरेति मार्गम् ॥[1]**

इति ।[2]

**येषां धर्मे च विस्पर्धा न तद्विज्ञानसाधनम् ।**
**येषां धर्मे न च स्पर्धा तेषां तज्ज्ञानसाधनम् ॥**

इति । यश्चैवं विनियोगज्ञ ईश्वरार्थं कर्मानुतिष्ठति **तस्य** विदुषो **धर्मः** पापात् **बलीयान् इति विद्धि** विजानीहि । तस्य पुनः केवलकर्मिणो न बलीयान्, तस्य उभयोरनुमत एव नान्यतरेणान्यतरस्य विनाशः ॥ २४ ॥

केषां तर्हि स्वर्गादिसाधनं? केषां वा चित्तशुद्धिद्वारेण ज्ञानसाधनं? इति; तत्राह श्लोकद्वयेन—

**येषां धर्मेषु विस्पर्धा बले बलवतामिव ।**
**ते ब्राह्मणा इतः प्रेत्य स्वर्गे यान्ति प्रकाशताम्॥२५**
**येषां धर्मे न च स्पर्धा तेषां तज्ज्ञानसाधनम् ।**
**ते ब्राह्मणा इतो मुक्तास्स्वर्गं यान्ति त्रिविष्टपम्॥२६**

**येषां** विषयपराणां स्वर्गादिकामे ऊर्वश्यादिभोगश्रवणात्तत्साधनभूतेषु ज्योतिष्टोमादिषु **धर्मेषु विस्पर्धा** मत्सरो वर्तते अस्मादहमुत्कृष्टतरं धर्मं कृत्वा अस्मादपि सुखी भूयासमिति । **बले बलवतामिव**

---

[1] सन. २-८,९.

[2] एतदनन्तर 'येषां धर्मे न च स्पर्धा तेषां तज्ज्ञानसाधनमित्याह श्लोकद्वयेन' इत्येवमुत्तरश्लोकावतारिकैव दृश्यते केषु चित्कोशेषु ।

यथा बलवतो राज्ञः बलवन्तं राजानं दृष्ट्वा अहमस्मादपि बलवत्तां संपाद्येनं जित्वा अस्मादपि सुखी भूयासमिति संघर्षो वर्तते तद्वत्। **ते** फलसङ्गसहिता **ब्राह्मणा** यज्ञाधिकारिणः **इतः प्रेत्य** धूमादिमार्गेण गत्वा **स्वर्गं** नक्षत्रादिरूपेण **यान्ति** प्राप्नुवन्ति **प्रकाशताम्**। श्रूयते च—'अथ य इमे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्यारभ्य 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते'[1] इति। येषां विषयानाकृष्टचेतसामनित्यफलसाधनज्योतिष्टोमादौ **धर्मे न च स्पर्धा** सङ्घर्षो न वर्तते **तेषां** फलनिरपेक्षमीश्वरार्थं कर्मानुतिष्ठतां तत् यज्ञादिकं कर्म शुद्धिद्वारेण ज्ञानसाधनम्। वक्ष्यति च स्वयमेव भगवान् शुद्धिद्वारेणैव ज्ञानसाधनत्वम्—

**पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मा।**[2]

इति। ये यज्ञादिभिः विशुद्धसत्त्वाः परमात्मानमात्मत्वेनावगच्छन्ति **ते ब्राह्मणा इतः** अस्मात्कार्यकारणलक्षणाल्लोकात्प्रेत्य **मुक्ताः** स्वर्गं सुखलक्षणं पूर्णानन्दं ब्रह्म **यान्ति** प्राप्नुवन्ति। इतरस्मात्स्वर्गादस्य वैलक्षण्यमाह—**त्रिविष्टपमिति**। त्रिभिराध्यात्मिकादितापैः, सत्त्वादिभिर्वा, जाग्रदादिभिर्वा विमुक्तं स्वरूपाविष्टं पातीति[3] त्रिविष्टपम्। अथवा—तैर्विष्टं अधिकारिणं पातीति त्रिविष्टपम् ॥ २२ ॥॥ २६ ॥

इदानीं [ब्रह्मचर्यादेव सर्वाणि कर्माणि सन्न्यस्य वेदान्तश्रवणादिकं कृत्वा स्वे महिम्नि व्यवस्थितस्य परमहंसपरिव्राजकाचार्यस्य][4] विदुषस्समाचारमाह—

---

[1]छान्दो. ५-१०-२-५. [2]सन. २-८.

[3]स्वरूपाविष्टं पातीति नास्ति केषु चित्कोशेषु.

[4][ ]एतच्चिह्नमध्यगतो ग्रन्थः बहुषु कोशेषु न दृश्यते.

**तस्य सम्यक्समाचारमाहुर्वेदविदो जनाः ।**
**नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम् ॥२७॥**

तस्य विरक्तस्य विदुषः **सम्यक्समाचारमाहुर्वेदविदो जनाः** **नैनं** योगिनं **मन्येत** चिन्तयेत **भूयिष्ठं** बहु **बाह्यमाभ्यन्तरं जनं** पुत्रमित्रकलत्रादि आभ्यन्तरं, इतरद्बाह्यम् । यथा पुत्रमित्रादयो न गृह्णन्ति तथा तेषामगोचर एव वर्तेत इत्यर्थः॥२७॥

कीदृशे देशेऽस्य वास इत्याह—

**यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोदकम् ।**
**अन्नपानं च ब्राह्मणस्तज्जीवेन्नानुसञ्ज्वरेत् ॥ २८ ॥**

**यत्र** यस्मिन् मृगगोचरादिपीडारहिते **देशे** अन्नपानादि **भूयिष्ठं** बहुळं विद्यत इति **मन्येत** **प्रावृषीव** वर्षाकाले **तृणोदकं** बहुळं विद्यते तद्वत् । तृणोलपमिति केचित्—

तृणोलपमिति ख्यातो मुनिभोज्योदना[1]दिषु ।

इति वदन्ति । पूज्य[2]दूर्वाविशेष इति केचित् । तत्र स्थित्वा **तत्** अन्नपानादिकं उपजीवेत् । **नानुसञ्ज्वरेत्** संतप्तो न भवेत्, अन्यथा अन्नपानादिरहिते देशे कथं नाम देहयात्रा सिद्ध्येदिति संतप्तो भवेत्, ततश्च न योगसिद्धिः ॥ २८ ॥

तत्राप्येवंविधजनसमीपे वास इत्याह—

**यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् ।**
**अतिरिक्तमिवाकुर्वन् स श्रेयान्नेतरो जनः ॥ २९ ॥**

---

[1] भोज्यान्ना.  [2] 'पूज्य' इति नास्ति बहुकोशेषु.

**यत्र** यस्मिन् देशे **अकथयमानस्य** तूष्णीम्भूतस्य स्वमाहात्म्यं प्रच्छादयतो येन केनचिदाच्छन्नस्य येन केनचिदाशितस्य यत्र क्व च न शायिन आत्मानमेन[1] लोकं पश्यतः जडमूकबालपिशाचादिवत्संचरत[2] परमहंसपरिव्राजकाचार्यस्य[3] **प्रयच्छत्यशिवं भयं**[4] अकल्याणमवमानादिकं प्रयच्छति । तथा—**अतिरिक्तमिवाकुर्वन्** यथा कश्चित् स्थितप्रज्ञलक्षणज्ञो ब्रह्मविदिति ज्ञात्वा प्रणिपातनमस्कारादिपूर्वकमीश्वरबुद्ध्या पूजयति[5] तद्वदज्ञाततया अतिरिक्तं ब्राह्मणजातिमात्रप्रयुक्तपूजातिरिक्त पूजान्तरं ब्रह्मविदनुरूपमकुर्वन् अवमानादिकमेव कुर्वन् यो **जनः सः** अस्य विदुषः **श्रेयान् नेतरः** य प्रणिपातादिपूर्वकमीश्वरबुद्ध्या सपूजयति । तथा चाह भगवान्मनुः—

> **सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।**
> **अमृतस्येव चाकांक्षेदवमानस्य सर्वदा ॥***

इति । तथा चाह भगवान् पराशरः—

> **सम्माननात् परां हानिं योगर्द्धेः कुरुते यतः ।**
> **जनेनावमतो योगी योगसिद्धिं च विन्दति ॥†**

इति ॥ २९ ॥

कीदृशस्य तर्ह्यन्नं भोज्यमिति ? अत्राह—

**यो वाऽकथयमानस्य ह्यात्मानं नानुसंज्वरेत् ।**
**ब्रह्मस्वं नोपहन्याद्वा तदन्नं सम्मतं सताम् ॥३०॥**

---

[1]आत्मानमिव. [2]जडवल्लोकमाचरतः.
[3]इद षष्ठ्यन्त बहुषु कोशेषु नास्ति. [4]अशिव जड इति मत्वा.
[5]न पूजयति *२-१६२ †विष्णुपु. २-१३-४२.

**यो वाऽकथयमानस्य** तूष्णीम्भूतस्य **सर्वोपसंहारं कृत्वा** पूर्णानन्दात्मना अवस्थितस्य **आत्मानं नानुसञ्ज्वरेत्** न तापयेत् **ब्रह्मस्वं नोपहन्याद्वा** ब्रह्मनिष्ठासाधनभूतं चेलाजिनकुशपुस्तकादिकं नोपहन्याद्वा । तथा चोक्तम्—

**रत्नहेमादिकं नास्य योगिनस्स्वं प्रचक्षते ।**
**कुशवल्कलचेलाद्यं ब्रह्मस्वं योगिनो विदुः ॥**

इति । अन्यदपि ब्रह्मस्वं ब्राह्मणस्वं नोपहन्याद्वा[1] **तदन्नं** तस्यान्नं **संमतं सतां** भोज्यत्वेन ॥ ३० ॥

पुनरपि तस्यैव समाचारमाह—

## नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः ।
## ज्ञातीनां तु वसन्मध्ये नैव विन्देत किञ्चन ॥ ३१ ॥

**नित्यं** नियमेन **अज्ञातचर्या** गूढचर्या **मे** मम कर्तव्येति **मन्येत ब्राह्मणः** ब्रह्मवित् । **ज्ञातीनां** पुत्रमित्रकळत्रादीनां[2] **मध्ये** सन्निधौ **वसन् नैव विन्देत** न प्रतिपद्येत **किञ्चन** किञ्चिदपि । कश्चनेति केचित् । योगी नैव विन्देत पुत्रमित्रकळत्रादिकं परित्यज्य केवलं स्वात्मनिष्ठो गूढचर्यो भवेदित्यर्थः । तथा च श्रुतिः—

**कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ।**
**यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ॥**

इति । तथाचाह भगवान्वसिष्ठः—

**यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।**
**न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥**

---

[1] द्वा वाशब्दस्समुच्चये.

[2] ज्ञातिपुत्रादीनां.

**जानन्नपि च मेधावी जडवल्लोकमाचरेत् । इति ॥**

ईदृशस्यैव ज्ञाननिष्ठाप्राप्तिलक्षणो मोक्षः नान्यस्य, विक्षेपबाहुळ्याद्दिति भावः । अथ वा—नित्यमज्ञातचर्या मे अज्ञाते चक्षुराद्यविषयभूते वाचामगोचरे अनुदितानस्तमितज्ञानात्मनाऽवस्थिते अशनायाद्यसंस्पृष्टे पूर्णानन्दस्वरूपे सर्वान्तरे प्रत्यग्भूते ब्रह्मणि चर्या निष्ठा समाधिलक्षणा मे मम कर्तव्या न पराग्भूतदेहेन्द्रियपुत्रमित्रकळत्रादौ स्थूलोहं कृशोहं गच्छामि तिष्ठामि क्लीबः काणः मूको बधिरः अमुष्य पुत्रोस्य नप्ता ब्राह्मणोहं क्षत्रियोहं भार्या मे पुत्रो मे विभवो मे स्निग्धबन्धुसुहृदः[1] इत्येवमात्मिका कर्तव्या इति मन्येत ब्राह्मणो ब्रह्मवित् । तथा च श्रुतिः—

**यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति**
**तदेव ब्रह्म इति ॥***

यस्मादेवमज्ञात एव ब्रह्मणि निष्ठा कर्तव्या तस्मात् ज्ञातीनां

**क्रोधमानादयो दोषा विषयाश्चेन्द्रियाणि च ।**
**एत एव समाख्याता ज्ञातयो देहिनस्तव ॥**[2]

इतीन्द्रियादीनां ज्ञातिशब्देनोक्तत्वात् इन्द्रियादीनां मध्ये वसन् पश्यन् शृण्वन् स्पृशन् जिघ्रन् गच्छन् अश्नन् मन्यमानो विजानन्नपि नैवमात्मानं प्रमात्रादिरूपेण विन्देत प्रतिपद्येत, तत्साक्षित्वादात्मनः । तथाच श्रुतिः—'अथ यो वेदेदं जिघ्राणीति स आत्मा'† इति । देहद्वयतद्धर्मानात्मत्वेन न गृह्णीयादित्यर्थः ॥ ३१ ॥

कस्मात्पुनरेवं न गृह्यत इति? अत्राह—

---

*केनो. ६. †छा. ८-१२-४.

[1] कृशोहं ब्राह्मणोहं क्षत्रियोहं.

[2] ज्ञातयश्च समाख्याता देहिनस्तत्त्वदर्शिनः । इति एत एव समाख्याता देहिनस्तत्त्वदर्शिनः । इति च पाठौ.

**को ह्येवमन्तरात्मानं ब्राह्मणो मन्तुमर्हति ।**
**निर्लिङ्गमचलं शुद्धं सर्वद्वन्द्वविवर्जितम् ॥ ३२ ॥**

**को हि निर्लिङ्गं** स्थूलसूक्ष्मविवर्जितं **अचलं** क्रियाकर्त्रादिशून्यं **शुद्धं** अविद्यादोषरहितं **सर्वद्वन्द्वविवर्जितं** अशनायापिपासाशोकमोहजरामृत्युशीतोष्णसुखदुःखादिधर्मैर्विवर्जितं **अन्तरात्मानं** सर्वान्तरं प्रमात्रादिसाक्षिणमात्मानं मानाविषयभूत[1] **एवं** उक्तेन प्रकारेण देहद्वयतद्धर्मतया 'स्थूलोहं कृशोहं गच्छामि पश्यामि मूको बधिरः काणः सुख्यहं दुःख्यहं' इति **ब्राह्मणः** मन् **अर्हति मन्तुम्** । तथा मनि ब्राह्मणत्वमेव हीयेतेत्यर्थः । वक्ष्यति च—

**य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ।***

इति ॥ ३२ ॥

यस्त्वेव मनुते स पापीयानित्याह—

**योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।**
**किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥३३॥**

**योन्यथा सन्तमात्मानं** ज्ञानात्मना निर्लिङ्गममलं शुद्धं सर्वद्वन्द्वविवर्जितं चित्सदानन्दाद्वितीयब्रह्मात्मना सन्तं स्वमात्मानम् । **अन्यथा** देहद्वयतद्धर्मात्मतया 'कर्ता भोक्ता सुखी दुःखी स्थूलोहं कृशोहं अमुष्य पुत्रोस्य नप्ता ब्राह्मणोहं क्षत्रियोहं' इत्येवमात्मना **प्रतिपद्यते किं तेन** मूर्खेणानात्मविदा आत्म**चोरेणात्मापहारिणा न कृतं पापं** । महापातकादि सर्वं तेनैव कृतमित्यर्थः । तथा च श्रुतिः—

---

[1] मानान्तराविषयभूत.

*सन. २-४५.

**असूर्या नाम ते लोका अन्धेन तमसा वृताः ।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥***

इति । तथा चोक्तम्—

**ब्राह्मण्यं प्राप्य लोकेऽस्मिन् न मूको बधिरो भवेत् ।**
**नापक्रामति संसारात्स खलु ब्रह्मघातकः ॥**

इति । तस्माद्विषयभूतदेहेन्द्रियादिषु आत्मभावं परित्यज्य अज्ञात एव वागाद्यगोचरे परमात्मनि निष्ठा कर्तव्येत्यर्थः ॥ ३३ ॥

अन्यथा देहेन्द्रियतद्धर्माननुपश्यतः किं भवतीत्यत आह—

**अश्रान्तस्स्यादनादाता सम्मतो निरुपद्रवः ।**
**शिष्टो न शिष्टवत्स स्याद्ब्राह्मणो ब्रह्मवित्कविः ॥३४**

यः **अनादाता** अनात्मभूतदेहेन्द्रियतद्धर्मानात्मत्वेन नोपादत्ते स पुरुषः **अश्रान्तः स्यात्** संसारश्रमयुक्तो न भवेत्, अशनायादेर्देहादिधर्मत्वात् । तथा च श्रुतिः—' अशनायापिपासे प्राणस्य शोकमोहौ मनसो जरामरणे शरीरस्य ' इति । देहद्वयाध्यासे हि तद्धर्माध्यासो भवति । एवमश्रान्ततया **निरुपद्रवः** भवति । क्रोधहर्षलोभमोहादयोऽन्तराया उपद्रवाः, तद्धीनो निरुपद्रवः, स **संमतः** शिष्टत्वेन विद्वद्भिः संमतः **शिष्टवन्न स्यात्** नाचरेत् जडवच्चरेत् **ब्राह्मणो ब्रह्मवित्कविः** ॥ ३४ ॥

इदानीमगूढचारिणं कुत्सयन्नाह—

**ये यथा वान्तमश्नन्ति बाला नित्यमभूतये ।**
**एवं ते वान्तमश्नन्ति स्ववीर्यस्योपभोजनात् ॥३५**

**मूढो बाल इति प्रोक्तश्श्वा च बाल इति स्मृतः ।**

*ईशो ३.

इति दर्शनात् **यथा बालाः** श्वानो वा मूढा वा **वान्तं** उद्गीर्णं भक्षन्ति एवं **ये** शिष्टा ब्रह्मविदः[1] स्वमाहात्म्यं ख्यापयन्तः अगूढचारिणो वर्तन्ते **ते वान्तं** उद्गीर्णं **अश्नन्ति स्ववीर्यस्योपभोजनात्** । यदिदं वान्ताशनं तदिदं **अभूतये** अनर्थायैवेत्यर्थः । तस्माद्गूढस्सन्नशिष्टवदेव समाचरेदित्यर्थः ॥ ३५ ॥

इदानीं योगिनं प्रशंसयन्नाह—

**अनाढ्या मानुषे वित्ते आढ्या वेदेषु ये द्विजाः ।**
**ते दुर्धर्षा दुष्प्रकम्प्या विद्यात्तान्ब्रह्मणस्तनुम् ॥३६॥**

**अनाढ्या** अबहुमता असक्तात्मानः **मानुषे वित्ते** जायापुत्रवित्तादिषु **आढ्या वेदेषु** वेदप्रतिपाद्याहिंसासत्यास्तेयापरिग्रहब्रह्मचर्यसमाधिसाधनेषु **ये द्विजाः ते दुर्धर्षा दुष्प्रकम्प्या विद्यात्तान्ब्रह्मणः तनुं** ब्रह्मस्वरूपभूताम् **विद्यात्** इत्यर्थः ॥ ३६ ॥

किञ्च ब्रह्मविन्महिमैषः—

**सर्वान् स्विष्टकृतो देवान् विद्याद्य इह कश्चन ।**
**न समानो ब्राह्मणस्य यस्मिन् प्रयतते स्वयम् ॥३७॥**

**सर्वान्** अग्न्यादीन् **स्विष्टकृतः** सुष्ठु इष्टं कुर्वन्तीति । तथा च श्रुतिः—'स्विष्टं कुर्वन्स्विष्टकृत्' *इति । **देवान्** प्रत्येकमुद्दिश्य त्यागार्थं **विद्यात् य इह कश्चन** सर्वदेवतायाज्यपि **ब्राह्मणस्य न समानः** ब्राह्मणेन ब्रह्मविदा न समान इत्यर्थः । नैतदाश्चर्यं—**यस्मिन्** देवताविशेषे हविष उद्देशत्यागेन **फलार्थं प्रयतते स्वयं** यजमानः 'इदमग्नये इदमिन्द्राय' इति सोपि

---

[1] ब्रह्मविद इति.

* तै. ब्रा. २-६-१०.

हविष्प्रतियोगी देवताविशेषो न समानो ब्रह्मविदा, किमु वक्तव्यं देवपशुर्यजमानो न समान इति । तथा च मोक्षधर्मे—

**ब्राह्मणस्य न सादृश्ये वर्तते सोपि किं पुनः ।**
**इज्यते येन मन्त्रेण यजमानो द्विजोत्तमः ॥**

इति । तथा चाह भगवान्मनुः—

**ब्रह्मविद्भ्यः परम्भूतं न किञ्चिदिह विद्यते ।**

इति ॥ ३७ ॥

पुनरपि तस्यैव समाचारमाह—

**यमप्रयतमानं तु मानयन्ति स मानितः ।**
**न मान्यमानो मन्येत नावमाने विसञ्ज्वरेत् ॥३८॥**

यं ब्रह्मविद् **अप्रयतमानं** तूष्णीम्भूत सर्वोपसहार कृत्वा स्वे महिम्नि व्यवस्थितं ब्रह्मचर्यादेव कृतसंन्यासिनं वेदान्तविज्ञानसुनिश्चितार्थं परमहंसपरिव्राजकाचार्यं[1] गूढचारिण केचिद्विद्वांसः स्थितप्रज्ञलक्षणज्ञा ब्रह्मविदिति मत्वा **मानयन्ति** पूजयन्ति चेत् **सः** तैः पूजितो विद्वान् **न मान्यमानः** अहमिति न **मन्येत** । तथा—स्थितप्रज्ञलक्षणानामनभिज्ञा. जड इति मत्वा अवमानं कुर्वन्ति इति चेन् तस्मिन् **अवमाने** निमित्ते **नानुसञ्ज्वरेत्** नानुतपेत् ॥ ३८ ॥

कथं तर्हि मानितेनावमानितेन वा मन्तव्यमित्याह श्लोकद्वयेन—

**लोकस्वभाववृत्तिर्हि निमेषोन्मेषवत्सदा ।**
**विद्वांसो मानयन्तीह इति मन्येत मानितः ॥३९॥**

---

[1] ' स्वे महिम्नि व्यवस्थितं ' इत्यनन्तर ' गूढचारिण ' इत्येव दृश्यते बहुषु कोशेषु.

**अधर्मविदुषो मूढा लोकशास्त्रविवर्जिताः ।**
**न मान्यं मानयिष्यन्ति इति मन्येदमानितः ॥४०**

यदिदं **विद्वांसो** ब्रह्मविदं **मानयन्ति** इति तत्तेषां **निमेषोन्मेषवत् स्वभाववृत्तिः** स्वाभाविकी प्रवृत्ति' इति **मन्येत** । तथा— अवमानितो जनैरवज्ञातो विद्वानिवं मन्येत—**अधर्मविदुषो मूढाः** विवेकहीना' **लोकशास्त्रविवर्जिताः न मान्यं** मानार्हं **मानयिष्यन्ति** मान्यमपि न मानयिष्यन्ति इत्येतदविदुषा स्वभाव' इति **मन्येत अमानित** अपूजितो विद्वान ॥ ३९–४० ॥

इदानीं मानमौनयोर्भिन्नविषयत्वमाह—

**न वै मानश्च मौनं च सहितौ वसतस्सदा ।**
**अयं मानस्य विषयो ह्यसौ मौनस्य तद्विदुः ॥४१**

**न वै मानश्च मौनं च सहितौ** एकत्र **वसतः सदा अयं** हि प्रत्यक्षादिगोचरो लोको लोक्यत इति प्रपञ्चो **मानस्य विषयः** इत्यर्थः । **असौ** परलोको **मौनस्य** कोमो तत् **विदुः** तदिति ब्रह्मणो नाम । तथाऽऽह भगवान्—

**ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः** ॥*

इति । तथा चानुगीतासु—

**ओं तत्सद्विष्णवे चेति सायुज्यादिप्रदानि वै ।**[1]

इति । तच्छब्दवाच्यं ब्रह्म मौनस्य विषय इत्यर्थः । एतदुक्तं भवति—मानात्संसारप्राप्तिः, मौनेन ब्रह्मप्राप्तिः इति । उक्तं च— हैरण्यगर्भे—

*भग. १७-२३.

1 ' सायुज्यानि पदानि वै ' इत्यपि पाठः.

अन्नाङ्गनादिभोगेषु भावो मान इति स्मृतः ।
ब्रह्मानन्दसुखप्राप्तिहेतुर्मौनमिति स्मृत ॥

इति ॥ ४१ ॥

इदानीं मानार्थसंवासे अपवर्गाभावं दर्शयति—

**श्रीर्हि मानार्थसंवासात्सा चापि परिपन्थिनी ।**
**ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ॥ ४२ ॥**

हे **क्षत्रिय मानार्थसंवासात्** मानविषयसंवासात् मानगोचरप्रपञ्चे परिवर्तमानस्य स्वर्गपश्वन्नाद्यादिसाधनभूतं कर्मानुतिष्ठतो विषयविषान्धस्य **श्रीर्हि** भवति । **सा चापि** श्रीः **परिपन्थिनी** श्रेयोमार्गविरोधिनी । तथा च मोक्षधर्मे—

निबन्धिनी रज्जुरेषा या ग्रामे वसतो रति ।
छित्त्वैनां सुकृतो यान्ति नैनं छिन्दन्ति दुष्कृतः ॥

इति । य एवं श्रियाऽभिभूतो मृदस्सन्विषयेषु प्रवर्तते तेन **प्रज्ञाहीनेन** विद्याहीनेन **ब्राह्मी** ब्रह्मानन्दलक्षणा **श्रीस्सुदुर्लभा** । तथा च हैरण्यगर्भे—

या नित्या चिद्घनानन्दा गुणरूपविवर्जिता ।
आनन्दाख्या परा शुद्धा ब्राह्मी श्रीरिति कथ्यते ॥

इति । सा च सुदुर्लभा श्रवणायापि न शक्या । तथा च श्रुतिः—

श्रवणायापि बहुभिर्यो न लभ्य । *इति ॥ ४२ ॥

इदानीं ब्रह्मलक्ष्मीप्रवेशद्वाराणि दर्शयति—

---

*कठो. १-२-७.

द्वाराणि सम्यक्प्रवदन्ति सन्तो
बहुप्रकाराणि दुराचराणि ।
सत्यार्जवे ह्रीर्दमशौचविद्याः
षण्मानमोहप्रतिबन्धकानि ॥ ४३ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्या-
मुद्योगपर्वणि धृतराष्ट्रसनत्कुमारसंवादे
श्रीमत्सनत्सुजातीये प्रथमोऽध्यायः.

---

**द्वाराणि** ब्रह्मलक्ष्मीप्रवेशद्वाराणि **सम्यक्प्रवदन्ति सन्तः बहुप्रकाराणि दुराचराणि** दुःखाचरणानि । कानि तानि? **सत्यार्जवे** सत्यं यथार्थसम्भाषणं भूतहितं च । आर्जवं अकौटिल्यं । **ह्रीः** अकार्यकरणे लज्जा । **दमशौचविद्याः** दमः अन्तःकरणोपरतिः । बहिःकरणोपरतिरिति केचित् । **शौचं** कल्मष[1]प्रक्षाळनम् । **विद्या** ब्रह्मविद्या । षट् एतानि **मानमोहप्रतिबन्धकानि** ॥ ४३ ॥

इति श्रीकृष्णद्वैपायनप्रणीतसनत्सुजातीयविवरणे
श्रीशङ्करभगवत्पादकृतौ प्रथमोऽध्यायः.

---

[1] मलकल्मष.

'अयं मानस्य' इत्यादिना मौनमाहात्म्यं प्रदर्शितं श्रुत्वा प्राह धृतराष्ट्रः—

## धृतराष्ट्र उवाच—

कस्यैष मौनः कतरन्नु मौनं
प्रब्रूहि विद्वन्निह मौनभावम्।
मौनेन विद्वानुपयाति मौनं
कथं मुने मौनमिहाचरन्ति ॥ १ ॥

कस्य कीदृशस्य एषः पूर्वोक्तो वागाद्युपरतिलक्षणो मौनः भवति। कतरन्नु एतयोरसम्भाषणात्मस्वरूपयो मौनं प्रब्रूहि हे विद्वन्! इह मौनभावं मौनस्य स्वभाव मौनेन तूष्णीम्भावेन विद्वानुपयाति मौनं ब्रह्म? आहोस्विदन्येन? कथं मुने मौनमिहाचरन्ति ॥ १ ॥

एवं पृष्टः प्राह भगवान्—

## सनत्सुजात उवाच—

यतो न वेदा मनसा सहैन-
मनुप्रविशन्ति ततोथ मौनम्।
यत्रोत्थितो वेदशब्दस्तथाऽयं
स तन्मयत्वेन विभाति राजन् ॥ २ ॥

यतः यस्मात् वेदा मनसा सह एनं परमात्मानं नानुप्रविशन्ति। तथा च श्रुतिः—

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।***

इति । **ततः** तस्मादेव कारणात् **स** एव वाचामगोचरः परमात्मा मौनम् । यद्येवं किंलक्षणस्तर्हि परमात्मा? तत्राह—**यत्रोत्थितो वेदशब्दः** यस्मिन् अर्थे निमित्तभूते समुत्थितो वेदशब्दः शास्त्रादिकारणं ब्रह्मेत्यर्थः । अथवा—यस्मिन् संवेदनाख्ये उत्थितो वाचकत्वेन प्रयुक्तो वेदशब्द इत्यर्थः । **तथा** वेदशब्दप्रतिपाद्यः सविद्रूपः **अयं** परमात्मा । यदि वाचामगोचरः परमात्मा कथमेतदवगम्यते संविद्रूपः परमात्मेति? तत्राह—**स** परमात्मा **तन्मयत्वेन** ज्योतिर्मयत्वेनास्माकं **विभाति राजन्** । एवमेवास्माकमनुभवो नात्राविश्वासः कर्तव्य इत्यर्थः । अथवा—श्रुतिस्मृतीतिहासपुराणादिषु ज्योतिर्मयत्वेन प्रतीयते । तथा च श्रुतिः—

**तं देवा ज्योतिषां ज्योतिः ।†**

**अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रोयं पश्यन्ति यतयः क्षीणदोषाः ।‡**

इति । तथा च भगवान्—

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।§**

इति ॥ २ ॥

इदानीं वेदस्वभावपरिज्ञानाय प्राह धृतराष्ट्रः—

## धृतराष्ट्र उवाच—

## ऋचो यजूंष्यधीते यस्सामवेदं च यो द्विजः ।
## पापानि कुर्वन्पापेन लिप्यते न स लिप्यते[1] ॥ ३ ॥

**यः पापानि कुर्वन्** ऋगादिवेदं **अधीते स** तेन वेदाध्ययनेन पूयते न वा? एतद्वक्तुमर्हसीत्यभिप्रायः ॥ ३ ॥

---

*तै. उ. २-४. †बृह. ६-४-१६. ‡मुण्डको. ३-१-५.

§[illegible] १३-१७ [1]किं न लिप्यते.

एवं पृष्टः प्राह भगवान्—

**सनत्सुजात उवाच—**

**नैनं सामान्यृचो वाऽपि यजूंषि च विचक्षण ।**
**त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् ॥४॥**

यः पापानि कुर्वन् [illegible]मधीते नैनं प्रतिषिद्धचारिणं ऋगादयो वेदाः **पापात्** [illegible] त्रायन्ते न रक्षन्ति । न ते **मिथ्या ब्रवीम्यहं** एवमेवैनत्, [illegible] तव्य इत्यर्थः ॥ ४ ॥

किं कुर्वन्तीति चेत् तत्राह—

**नच्छन्दांसि वृजिनात्तारयन्ति**
**मायाविनं मायया वर्तमानम् ।**
**नीडं शकुन्ता इव जातपक्षा-**
**श्छन्दांस्येनं प्रजहन्त्यन्तकाले[1] ॥ ५ ॥**

**न छान्दांस्येनं वृजिनात्** अधर्मात् नास्तिकं पापकारिण अधीतवेदं अधीतवेदार्थं **मायाविनं** धर्मध्वजिन **मायया वर्तमानं** मिथ्याचारिणं **तारयन्ति** न रक्षन्ति । किं करिष्यन्तीति चेत्—यथा **शकुन्ताः** पक्षिणः जातपक्षा नीड स्वाश्रयं परित्यजन्ति एव **छन्दांसि अन्तकाले** मरणकाले **एनं** स्वाश्रयभूतं **प्रजहन्ति** परित्यजन्ति न पुरुषार्थाय भवन्तीत्यर्थः ॥ ५ ॥

एवमुक्ते प्राह धृतराष्ट्रः—

**धृतराष्ट्र उवाच—**

---

[1] अत्र तृतीयचतुर्थपादयोः पौर्वापर्यव्यत्ययः केषुचित्कोशेषु दृश्यते ॥

इत्यात्मविदोऽमृतत्वप्राप्तिमनात्मविदः आत्मविनाशमनर्थप्राप्तिं च दर्शयित्वा—

यदैतमनुपश्यत्यात्मानं देवमञ्जसा ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥

इत्यादिभिर्वाक्यैस्तत्स्वरूपतदर्थदर्शनतत्फलानि भूयोभूयो दर्शयित्वा कथमेनं मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाणं विषयाभिभूतं पापकारिणं मोक्षयित्वा परमपदे परमात्मनि पूर्णानन्दे स्वाराज्ये मोक्षाख्ये स्थापयिष्यामीति मत्वा तत्प्राप्तिसाधनज्ञानसाधनविविदिषासाधनत्वेन यज्ञादीन्विनियुङ्क्ते—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'* इति । तस्मात्तदर्थत्वेनैव यज्ञादीनां पुरुषार्थत्वम् । इतरत्र तु पुनः स्वर्गादौ श्येनादीनामिवापुरुषार्थत्वं, संसारानर्थहेतुत्वात् । तथा च श्रुतिः—

प्लवा ह्येते अदृढा यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्ति ॥†

इति । यस्मादेव मोक्षतत्साधनप्रतिपादकत्वेन संसारानर्थनिवृत्तिहेतुत्वं वेदानां तस्माद्वेदा वेदविदं त्रातुं शक्ता एवेत्येतत्सर्वमभिप्रेत्याह श्लोकत्रयेण—तत्र प्रथमेन नित्यापरोक्षं परमपुरुषार्थं परमात्मानं दर्शयति—

## सनत्सुजात उवाच—

**तस्यैव नामादिविशेषरूपै-**
**रिदं जगद्भाति महानुभाव ।**
**निर्दिश्य सम्यक्प्रवदन्ति वेदा-**
**स्तद्विश्ववैरूप्यमुदाहरन्ति ॥ ७ ॥**

तस्यैव परमात्मनो मायापरिकल्पितैः **नामादिविशेषरूपैः इदं**

---

*बृह. ६-४-२२. †मुण्डको. १-२-७.

**जगद्भाति हे महानुभाव!** । कथमेतदवगम्यते तस्यैव नामादि-विशेषरूपैरिदं जगद्भातीति ?

**इन्द्रो मायाभिः पुरुरूप ईयते ।**

इति मायानिर्मितं बहुरूपं **निर्दिश्य** तस्यैव सम्यग्रूपं 'तदेत-द्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनं'* इति **प्रवदन्ति वेदाः** । तथा च—'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इत्यादिना तस्यैव मूर्तामूर्तात्मकमात्मवज्जग-त्स्वरूप[1] निर्दिश्य तस्य सम्यग्रूपं 'नेति नेति'* इत्यादिना प्रवदन्ति वेदाः । तथा—'आत्मन आकाशस्सम्भूतः'† इति वियदादिधरित्र्यन्तं तस्यैव कार्यं निर्दिश्य कोशोपन्यासमुखेन तस्यैव सम्यग्रूपं,

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।**†

इत्यादिना प्रवदन्ति वेदाः । 'अधीहि भगव इति होपससाद'‡ इत्यादिना नामादिप्राणान्तं तस्यैव मायानिमित्तं जगन्निर्दिश्य 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा'‡ इत्यादिना तस्यैव सम्यग्रूपं भूमानं तमसः पारं स्वे महिम्नि व्यवस्थितं प्रवदन्ति वेदाः । न केवलं वेदाः प्रवदन्ति, अपि तु मुनयोपि तत् ब्रह्म **विश्ववैरूप्यं** विश्वरूपविपरीतरूपं **उदा-हरन्ति** । तथा चाह भगवान्पराशरः—

**प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।**
**मनसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥**§
**तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम् ।**
**तद्विश्वरूपवैरूप्यलक्षणं परमात्मनः ॥ इति ॥७ ॥**

इदानीं ईश्वरार्थमनुष्ठीयमानानां तत्प्राप्तिसाधनज्ञानापेक्षितशुद्धि-

---

[1]मूर्तामूर्तात्मक जगत्स्वरूप.   *बृह. ४-५-१९, ४-३-६.
†तै. २-१, ४.   ‡छा. ७-१-१, ७-२४-१.   §विष्णुपु. ६-८-५३.

द्वारेण पारंपर्येण पुरुषार्थत्वं, अन्येषां संसारानर्थहेतुत्वेनापुरुषार्थत्वं च दर्शयति श्लोकद्वयेन—

**तदर्थमुक्तं तप एतदिज्या**
**ताभ्यामसौ पुण्यमुपैति विद्वान् ।**
**पुण्येन पापं विनिहत्य पश्चात्**
**स जायते ज्ञानविदीपितात्मा ॥ ८ ॥**

**ज्ञानेन चात्मानमुपैति विद्वान्**
**न चान्यथा वर्ग[1]फलानुकाङ्क्षी ।**
**अस्मिन्कृतं तत्परिगृह्य सर्वं**
**अमुत्र भुङ्क्ते पुनरेति मार्गम् ॥ ९ ॥**

यद्विश्वरूपविपरीतरूपं ब्रह्म **तदर्थमुक्तं** वेदेन । किं[2] **तपः** कृच्छ्रचान्द्रायणादि **इज्या** ज्योतिष्टोमादि । किं ततो भवतीति चेत्—**ताभ्यां** इज्यातपोभ्यां **असौ विद्वान्** पूर्वोक्तविनियोगज्ञः ईश्वरार्थं कर्मानुतिष्ठन् **पुण्यं उपैति** प्राप्नोति कर्मजन्यापूर्वसंयुक्तो भवति । तेन **पुण्येन पापं विनिहत्य** क्षपयित्वा **पश्चात्** उत्तरकालं क्षपिताशेषकल्मषो जायते **ज्ञानविदीपितात्मा** ज्ञानप्रकाशिताचित्सदानन्दाद्वितीयब्रह्मस्वरूपो भवति । **ज्ञानेन चात्मानं** परमात्मानं **उपैति** प्राप्नोति **विद्वान्** आत्मवित् । **अन्यथा** पुनरीश्वरार्थं कर्माननुष्ठानेनाक्षपिताशेषकल्मषो **न** ज्ञानी भवति । तदा **वर्ग[1]फलानुकांक्षी** इन्द्रियफलानुकांक्षी स्वर्गादिफलानुकांक्षी सन् **अस्मिन्** लोके **कृतं तत्** यज्ञादिकं **परिगृह्य सर्वं अमुत्र** पर-

---

[1] स्वर्ग. [2] तपोयागाभ्यां.

लोके तत्फलमुपभुङ्क्ते । ततः कर्मशेषेण **पुनरेति मार्गं संसार-**
मार्गम् । तथा च श्रुतिः—‘ तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं
पुनर्निवर्तन्ते ’* ॥ ८ ॥ ९ ॥

इदानीं विद्वदविद्वदपेक्षया कर्मणा फलवैषम्यमाह—

**अस्मिँल्लोके तपस्तप्तं फलमन्यत्र भुज्यते ।**

**ब्राह्मणानां तपस्स्वृद्धमन्येषां तावदेव तत् ॥ १० ॥**

**अस्मिन् लोके** यत् **तपस्तप्तं** तस्य **फलं अन्यत्र** अमुष्मिन्
लोके **भुज्यते** इति सर्वेषां समानम् । **ब्राह्मणानां** ब्रह्मविदां
पुनरयं विशेषः—**तपस्स्वृद्धं** अतीव समृद्धं भवति फलवृद्धिहेतु-
र्भवतीत्यर्थः । तथा च श्रुतिः—‘ यदेव विद्यया करोति श्रद्ध-
योपनिषदा तदेव वीर्यवत्तरं भवति ’* इति । **अन्येषां** अना-
त्मविदां वैषयिकाणां **तावदेव तत्** न समृद्धं भवति; यस्य
कर्मणो यत्फलं श्रुतं तावन्मात्रफलसाधनं न फलसमृद्धिहेतुर्भवती-
त्यर्थः ॥ १० ॥

श्रुत्वैवमाह धृतराष्ट्रः—

**धृतराष्ट्र उवाच—**

**कथं समृद्धमत्यर्थं तपो भवति केवलम् ।**

**सनत्सुजात तद्ब्रूहि कथं विद्यामहं प्रभो ॥ ११ ॥**

ऋज्वेतत्[1] ॥ ११ ॥

एवं पृष्टः प्राह भगवान्—

---

*छा. ५-१०-५, १-१-१०.

[1]श्लोकोयं स्पष्टार्थः.

**सनत्सुजात उवाच—**

**निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते ।**
**एतत्समृद्धमत्यर्थं तपो भवति नान्यथा ॥ १२ ॥**

यत् एतत् निष्कल्मषं तपः तत् केवलं परिचक्षते केवलं बीजमित्युक्तम् । सर्वस्यास्य प्रपञ्चस्य बीजं निमित्तं यत्तत्केवलमित्युक्तम् । आहोशना—

गुणसाम्ये स्थितं तत्त्वं केवलं त्विति कथ्यते ।
केवलादेतदुद्भूतं जगत्सदसदात्मकम् ।

इति । तत् एतत् एव केवलं तपः समृद्धमत्यर्थं च भवति नान्यथा यदा निष्कल्मषं न भवति सकल्मषं स्यात्तदा समृद्धमत्यर्थं च न भवति ॥ १२ ॥

एतदेव प्रशंसति—

**तपोमूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय ।**
**तपसा वेदविद्वांसः परं त्वमृतमाप्नुयुः[1] ॥ १३ ॥**

स्पष्टार्थश्लोकः ॥ १३ ॥

श्रुत्वैवमाह राजा—

**धृतराष्ट्र उवाच—**

**कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः ।**
**सनत्सुजात येनेदं विद्यां गुह्यं सनातनम् ॥ १४ ॥**

'निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते' इति श्रुतस्य तपसः

---

[1] परेत्यामृत. पदं चामृत.

कल्मषं ब्रूहि हे सनत्सुजात! येन निष्कल्मषेण तपसा इदं ब्रह्म गुह्यं सनातनं विद्याम् ॥ १४ ॥

एवं पृष्टः प्राह भगवान्—

## सनत्सुजात उवाच—

क्रोधादयो द्वादश यस्य दोषा-
स्तथा नृशंसानि च सप्त राजन् ।
ज्ञानादयो द्वादश चाततानाः-
श्शास्त्रे गुणा ये विदिता द्विजानाम् ॥ १५

क्रोधादयो द्वादश यस्य तपसो दोषाः तथा नृशंसानि च सप्त हे राजन्! यस्य तपसो दोषाः। तथा—ज्ञानादयो द्वादश च आततानाः विस्तीर्यमाणाः शास्त्रे वेदशास्त्रे ये विदिता गुणाः द्विजानां तानेतान् गुणान् दोषांश्च वक्ष्यामीत्यभिप्रायः ॥ १५ ॥

क्रोधादीन् दर्शयति—

क्रोधः कामो लोभमोहौ विवित्साऽ-
कृपाऽसूया मानशोकौ स्पृहा च ।
ईर्ष्या जुगुप्सा च महागुणेन
सदा वर्ज्या द्वादशैते नरेण ॥ १६ ॥

क्रोधो नाम कामप्रतिघातादुत्पद्यमानः ताडनाक्रोशनादिहेतुः कामहानिहेतुकश्च अन्तःकरणविक्षेपो गात्रस्वेदकम्पनादिलिङ्गः।

**कामः** स्त्र्याद्यभिलाषः । **लोभः** परद्रव्येच्छा, आर्जितस्य[1] द्रव्यस्य तीर्थे विनियोगासामर्थ्यं च । **मोहः** कृत्याकृत्यविवेकशून्यता । **विवित्सा** विषयरसान्वेत्तुमिच्छा । **अकृपा** निष्ठुरता। **असूया** गुणेषु दोषाविष्करणं, परगुणादिष्वक्षमा वा[2] । **मानः** आत्मबहुमानित्वम् । **शोकः** इष्टार्थवियोगजोन्तःकरणविक्षेपः रोदनचिन्तनादिलिङ्गोऽप्रतीकारविषयः । **स्पृहा** विषयभोगेच्छा । **ईर्ष्या** परश्रियामसहिष्णुता । **जुगुप्सा** परगुणानपह्नोतुमिच्छा, बीभत्सा वा । एते क्रोधादयो दोषाः तपसः कल्मषरूपाः **सदा वर्ज्याः महागुणेन** ब्राह्मणेन । ब्राह्मणानामुत्कृष्टगुणयोगः स्वभावसिद्धः। तथा चोक्तं भगवता—

**शमो दमस्तपश्शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥***

इति । अथवा—महागुणो ब्रह्मप्राप्तिगुणः; तेन ब्रह्मप्राप्तिलक्षणेन महागुणेन समन्वितेन सदा वर्जनीया इत्यर्थः । उक्तं च नाममहोदधौ—

**महान् ब्रह्मेति च प्रोक्तो[3] महत्त्वान्महतामपि ।**
**तत्प्राप्तिगुणसंयुक्तो महागुण इति स्मृतः ॥**

इति ॥ १६ ॥

तेषां सदा वर्ज्यत्वे हेतुमाह—

**एकैकमेते राजेन्द्र मनुष्यं पर्युपासते ।**
**लिप्समानोन्तरं तेषां मृगाणामिव लुब्धकः ॥१७॥**

यथा मृगाणां अन्तरं छिद्रं लिप्समानो रन्ध्रान्वेषणपरो लुब्धको मृगयुरनुवर्तते, यथा च तच्छिद्रं लब्ध्वा तान् हन्ति;

---

[1]न्यायार्जितस्य. [2]च. *भग. १८-४२. [3]महद्ब्रह्म इति प्रोक्तं.

तथा **तेषां** मनुष्याणां रन्ध्रान्वेषणपरा **एते** क्रोधादयः **एकैकं मनुष्यं पर्युपासते** । अथवा—**मनुष्यान् पर्युपासते** इति पाठः, तस्मिन् एकैकं पृथक्पृथक् मनुष्यान् पर्युपासते इति योजना। तथा छिद्रं लब्ध्वा तान् घ्नन्ति । तस्मादेतेष्वेकोपि दोषो विनाशकारणम् । यस्मादेवं तस्मात्सदा वर्ज्या इत्यर्थः । उक्तं च हैरण्यगर्भे—

> **यथा पान्थस्य कान्तारे सिंहव्याघ्रमृगादय ।**
> **उपद्रवकरास्तद्वत्क्रोधाद्या दुर्गुणा नृणाम् ॥**

इति ॥ १७ ॥

इदानीं नृशंससप्तकमाह—

> **सम्भोगसंविद्विषमेधमानो**
> **दत्तानुतापी कृपणोऽबलीयान् ।**
> **वर्गप्रशंसी वनितां च द्वेष्टा**
> **एते परे सप्त नृशंसरूपाः ॥ १८ ॥**

सम्भोगे विषयसम्भोगे संविद्बुद्धिर्यस्य वर्तते स **सम्भोगसंवित् विषमेधमानः** विषमिव परेषामुपद्रवं कृत्वा एधमानः वर्धमानः। अथवा—द्विषमेधमान इति पाठान्तरं[1], द्विषं द्वेष्यं कर्म कृत्वा प्राणिनां तद्द्वारेणैव वर्धमानः । **दत्तानुतापी** यः पूर्वं धर्मबुद्ध्या धनादिकं दत्वा पश्चात् किमर्थमहं दत्तवानिति तप्तो भवति स दत्तानुतापी । **कृपणः** यत्किञ्चिदर्थलवलाभमात्रलोभात्सर्वावमानं सहते यस्स कृपणः **अबलीयान्** ज्ञानबलवर्जितः । **वर्गप्रशंसी** इन्द्रियवर्गप्रशंसी । **वनितां च द्वेष्टा** अनन्यशरणां भार्यां यो

---

[1] पदद्वयं.

द्वेष्टि सः । एते परे पूर्वोक्तेभ्यः क्रोधादिभ्यः सप्त नृशंसरूपाः ॥ १८ ॥

इदानीं ज्ञानादयो द्वादश गुणा उच्यन्ते—

**ज्ञानं च सत्यं च दमश्श्रुतं च**
**अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।**
**यज्ञश्च दानं च धृतिश्शमश्च**
**महाव्रता द्वादश ब्राह्मणस्य ॥ १९ ॥**

**ज्ञानं** तत्त्वार्थसंवेदनम् । **सत्यं** यथार्थसंभाषणं भूतहितं च । **दमो** मनसो दमनम् । **श्रुतं** अध्यात्मशास्त्रश्रवणम् । मात्सर्यं सर्वभूतेष्वसहमानता, तदभावः **अमात्सर्यम्** । **ह्रीः** अकार्यकरणे लज्जा । **तितिक्षा** द्वन्द्वसहिष्णुता । **अनसूया** परदोषानाविष्करणम् । **यज्ञः** अग्निष्टोमादिः, महायज्ञश्च[1] । **दानं** ब्राह्मणेभ्यो[2] धनादिपरित्यागः । **धृतिः** विषयसन्निधावपि इन्द्रियनिग्रहः । **शमः** अन्तःकरणोपरतिः, बहिःकरणोपरतिरिति केचित् । एते ज्ञानादयो **महाव्रताः** परपुरुषार्थसाधनभूताः **ब्राह्मणस्य**॥१९

ये 'ज्ञानादयो द्वादश चाततानाः' इति पूर्वत्र प्रस्तुतास्ते वर्णिताः । इदानीं गुणस्तुतिं करोति—

**यस्त्वेतेभ्योऽप्रवसेद्द्वादशभ्य-**
**स्सर्वामिमां पृथिवीं स प्रशिष्यात् ।**
**त्रिभिर्द्वाभ्यामेकतो वा विमुक्ताः**
**क्रमाद्धिशिष्टा मौनभूता भवन्ति ॥२०॥**

---

[1] ह्राश्च. [2] ब्राह्मणादिभ्यो.

**यस्तु एतेभ्यः** पूर्वोक्तेभ्यः **अप्रवसेत्** प्रवासं न करोति तैरेव समन्वितो भवेत् **स सर्वामिमां पृथिवीं प्रशिष्यात्** प्रशास्ति आत्मवश्यां करोति । य एतेषां मध्ये **त्रिभिर्द्वाभ्यां एकतः** एकस्मात् **वा अविमुक्ताः** एतेषामन्यतमेनापि समन्वितास्ते एते क्रमेण **विशिष्टा** ज्ञानिनो भूत्वा **मौनभूता** ब्रह्मभूता **भवन्ति** ॥ २० ॥

इदानीं दमदोषानाह श्लोकत्रयेण—

**दमोष्टादशदोषस्स्यात्प्रतिकूलं कृते भवेत् ।**
**अनृतं पैशुनं तृष्णा प्रातिकूल्यं तमोऽरतिः ॥२१॥**
**लोकद्वेषोभिमानश्च विवादः प्राणिपीडनम् ।**
**परिवादोतिवादश्च परितापोऽक्षमा धृतिः ॥ २२ ॥**
**असिद्धिः पापकृत्यं च हिंसा चेति प्रकीर्तिताः ।**
**एतैर्दोषैर्वियुक्तो यः स दमस्सद्भिरुच्यते ॥ २३ ॥**

**दमः अष्टादशदोषस्स्यात्** अष्टादशदोषसमन्वितो भवति । किमेतेषां दोषत्वमिति चेत्—**प्रतिकूलं कृते भवेत्** एतेषामन्यतमे कृते दमस्य प्रतिकूलं कृतं भवेत् । के ते?—**अनृतं** अयथार्थवचनम् । **पैशुनं** परदूषणवचनम् । **तृष्णा** विषयेप्सा । **प्रातिकूल्यं** सर्वेषां प्रतिकूलता । **तमः** अज्ञानम् । **अरतिः** अयथालाभसंतुष्टिः । अथवा—रतिः स्त्रीभोगेष्वभिरतिः । **लोकद्वेषः** लोकानामुद्वेगाचरणम् । **अभिमानः** सर्वेषामप्रणतिभावः **विवादः** जनकलहाचरणम् । **प्राणिपीडनं** स्वदेहपूरणाय प्राणिहिंसनम् । **परिवादः** समक्षे परदूषणाभिधानम् । **अतिवादः** निरर्थकोतिप्रलापः । **परितापः** वृथादुःखचिन्तनम् । **अक्षमा**

द्वन्द्वासहिष्णुता । अधृतिः इन्द्रियार्थेषु चपलता । असिद्धिः धर्मज्ञानवैराग्याणाम् । पापकृत्यं प्रतिषिद्धाचरणम् । हिंसा अविहितहिंसा । इति इत्थं दमदोषाः प्रकीर्तिताः । एतैः अनृतादिभिः दोषैः विमुक्तो यो गुणः सः दम इति उच्यते सद्भिः ॥ २१–२३ ॥

इदानीं मददोषानाह—

**मदोष्टादशदोषस्स्यात्त्यागो भवति षड्विधः ।**
**विपर्ययास्स्मृता एते दमदोषा उदाहृताः ॥२४॥**

मदोष्टादशदोषस्स्यात् त्यागश्च षड्विधो भवति । विपर्ययाः स्मृता एते अनृतादिहिंसान्ताः ये दमदोषत्वेन स्मृताः त एते विपर्ययाः स्मृताः सत्यादिरूपत्वेन स्मृताः मददोषाः मदनाशकराः उदाहृता । के ते ?—सत्यापैशुनातृष्णाप्रातिकूल्यातमोऽरतिलोकाद्वेषानभिमानाविवादाप्राणिहिंसाऽपरिवादानतिवादापरितापक्षमाधृतिसिद्ध्यपापकृत्याऽहिंसा इत्येते मदनाशकरा उदाहृताः ॥ २४ ॥

'त्यागो भवति षड्विधः' इत्युक्त । तत्राह—

**श्रेयांस्तु षड्विधस्त्यागस्तृतीयस्तत्र दुष्करः ।**
**तेन दुःखं तरन्त्येव तस्मिंस्त्यक्ते जितं भवेत्[1] ॥२५**

---

[1]...भिन्न तस्मिन् जित भवेत् । श्रेयास्तु षड्विधस्त्यागाश्श्रिय प्राप्य न हृष्यति । इष्टापूर्ते द्वितीय स्यान्नित्यंवैराग्ययोगत. । कामत्यागश्च राजेन्द्र स तृतीय इति स्मृत । अप्यवाच्य वदन्त्येत स तृतीयो गुणस्स्मृतः । त्यक्तैर्द्रव्यैर्यद्भवति नोपयुक्तैश्च कामतः । न च कर्मस्वसिद्धेषु दुःख तेन च न ग्लपेत् । सर्वै रेव गुणैर्युक्तो द्रव्यवानपि यो भवेत् । अप्रिये च समुत्पन्ने व्यथा जातु न गच्छति । इष्टान् पुत्रांश्च दारांश्च न याचेत कदाचन ।

[इत्येवमधिकः पाठो नीलकण्ठीयव्याख्यानुसारी.]

**श्रेयान्** तु षड्विधस्त्यागः तत्र एतेषु षड्विधत्यागेषु मध्ये तृतीयः त्यागो दुष्करो भवति दुःखसंपाद्यः । तेन तृतीयेन त्यागेन 'दुःखं आध्यात्मिकादिभेदभिन्नं **तरन्त्येव** तस्मिन् त्यागे कृते सति सर्वं **जितं** भवेत् ॥ २९ ॥

त्यागषट्कं दर्शयति—

**अर्हते याचमानाय पुत्रान्वित्तं ददाति यत् ।**
**इष्टापूर्तं द्वितीयं स्यात् नित्यं वैराग्ययोगतः ॥२६॥**
**कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः ।**
**अप्रमादी भवेदेतैस्स चाप्यष्टगुणो मतः ॥ २७ ॥**

अर्हते योग्याय **याचमानाय पुत्रान् वित्तं ददाति** इति **यत्** तदेतत्त्यागद्वयं षण्णा मध्ये प्रथमम् । **इष्टापूर्तं द्वितीयं स्यात्** इष्टं श्रौते कर्मणि यद्दानम् । पूर्तं स्मार्तकर्मणि । इष्टं देवेभ्यो दत्तं, पूर्तं पितृभ्य इति केचित् । **नित्यं वैराग्ययोगतः** विशुद्ध-सत्त्वस्यानित्यत्वादिदोषदर्शिन तत्तो विरक्ततया धनादिपरित्यागः **कामत्यागश्च राजेन्द्र ! स तृतीय इति स्मृतः**[1] । किमेतैर्भ-वतीत्यत आह—अप्रमादीति । अप्रमादिनां कामो नश्यति । उक्तं राजधर्मेषु—

**अपध्यानमलो धर्मो मलोर्थस्य निगूहनम् ।**
**अप्रमादमलः कामो भूयस्स गुणवर्धनः ॥**

य **एतैः** षड्भिस्समन्वितः त्यागैः सः **अप्रमादी भवेत्** । **सः** अप्रमादः **अष्टगुणः** अष्टाभिर्गुणैस्समन्वितो भवति ॥ २६ ॥ २७ ॥

---

[1]षण्णां यद्विकत्रय तेषु तृतीय द्विकरूपत्याग इत्यभिप्रायः [इत्यधिक मुद्रामुद्रितकोशे.]

के ते? तान् दर्शयति—

**सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च ।**

**अस्तेयो ब्रह्मचर्यं च तथाऽसङ्ग्रह एव च ॥ २८ ॥**

सत्यं यथार्थसंभाषणं[1] । ध्यानं चेतसः कस्मिंश्चिच्छुभाश्रये मण्डलपुरुषादौ तैलधारावत्सन्तत्यविच्छेदिनी प्रवृत्तिः । समाधानं प्रणवेन विश्वाद्युपसंहारं कृत्वा स्वाभाविकनित्यसदानन्दाद्वितीयब्रह्मात्मनाऽवस्थानम् । चोद्यं 'कोऽहं कस्य कुतो वा' इत्यादि । वैराग्यं दृष्टानुश्राविकविषयवितृष्णता । अस्तेयः अचौर्यमात्मनो द्रव्यस्य वा । आत्मचौर्यमुक्तं—'योन्यथा सन्तमात्मानम्'* इति । ब्रह्मचर्यं अष्टाङ्गमैथुनत्यागः । तथा चोक्तम्—

> स्मरणं कीर्तनं केलिः वीक्षणं गुह्यभाषणम् ।
> संकल्पोध्यवसायश्च क्रियानिष्पत्तिरेव च ॥
> एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
> विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥

इति । असङ्ग्रहः अपरिग्रहः पुत्रदारक्षेत्रादीनाम् । एतान्परिपालयेत् ॥ २८ ॥

दोषान् विवर्जयेदित्याह—

**एवं दोषा दमस्योक्तास्तान्दोषान्परिवर्जयेत् ।**

दमोष्टादशदोषस्स्यादिति ये दोषा उक्ताः तान् दोषान् परिवर्जयेत् ।

कस्मादित्याह—

**दोषत्यागेऽप्रमादस्स्यात्स चाप्यष्टगुणो मतः ॥ २९ ॥**

---

[1] भूतहित चेत्यधिक क्वचित्.

*समस्त. १-३३.

तेषु दोषेषु त्यक्तेषु प्रमादी न भवेदित्यर्थः । सोपि **अप्रमादः अष्टगुणो मतः** । 'सत्यं ध्यानम्' इत्यादिना पूर्वमेवोद्दिष्टत्वादित्यर्थः ॥ २९ ॥

इदानीं सत्यस्तुति क्रियते—

**सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः ।**
**तांस्तु सत्यमुखानाहु स्सत्ये ह्यमृतमाहितम् ॥ ३० ॥**

**सत्यात्मा** सत्यस्वरूपो **भव** हे **राजेन्द्र! सत्ये लोकाः प्रतिष्ठिताः तांस्तु सत्यमुखान्** सत्यप्रधानान् सत्याधीनात्मलाभान् **आहुः । सत्ये हि अमृतमाहितं** अमृतं मोक्षः ॥ ३० ॥

**निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत् ।**
**एतद्धात्रा कृतं वित्तं सत्यमेव सतां वरम् ॥ ३१ ॥**

**निवृत्तेनैव दोषेण** 'क्रोधादयः' इत्यादिना पूर्वोक्तदोषरहितस्सन् **तपोव्रतमिहाचरेत् । एतत्** धात्रा परमेश्वरेण **कृतं वित्तं सत्यमेव सतां वरम्** ॥ ३१ ॥

इदानीं '**कथं समृद्धमत्यर्थम्**' इत्यनेन उपक्रान्तमर्थमुपसंहरति—

**दोषरेतैर्वियुक्तं तु गुणैरेतैस्समन्वितम् ।**
**एतत्समृद्धमत्यर्थं तपो भवति केवलम् ॥ ३२ ॥**

**दोषैरेतैः** 'क्रोधादयः' इत्यादिना पूर्वोक्तैः **वियुक्तं तु गुणैरेतैः** ज्ञानादिभिश्च **समन्वितं** यत् **एतत्समृद्धमत्यर्थं तपो भवति केवलम्** ॥ ३२ ॥

किं बहुना—

**यन्मां पृच्छसि राजेन्द्र संक्षेपात्तद्ब्रवीमि ते ।**
**एतत्पापहरं शुद्धं जन्ममृत्युजरापहम् ॥ ३३ ॥**

हे राजेन्द्र! यन्मां पृच्छसि तत् संक्षेपात् समासतः ब्रवीमि ते एतत् वक्ष्यमाणं पापहरं शुद्धं जन्ममृत्युजरापहम् ॥ ३३ ॥

किं तदिति चेत् तत्राह—

**इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।**
**अतीतानागतेभ्यश्च मुक्तश्चेत्स सुखी भवेत् ॥ ३४ ॥**

हे भारत! इन्द्रियेभ्यः सविषयेभ्यः पञ्चभ्यः वर्तमानेभ्यः मनसश्चैव तथा अतीतेभ्यः अनागतेभ्यश्च मुक्तश्चेत्स सुखी भवेत् मुक्त एव भवेदित्यर्थः ॥ ३४ ॥

एवमुक्ते प्राह धृतराष्ट्रः—

धृतराष्ट्र उवाच—

**आख्यानपञ्चमैर्वेदैः भूयिष्ठं कत्थ्यते जनः ।**
**तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथाऽपरे ॥ ३५ ॥**
**द्विवेदाश्चैकवेदाश्च अनृचश्च तथाऽपरे ।**
**एतेषु मेऽधिकं ब्रूहि यमहं वेद ब्राह्मणम् ॥ ३६ ॥**

आख्यानं पुराणं पञ्चमं येषां वेदानां ते आख्यानपञ्चमाः। श्रूयते छान्दोग्ये—'इतिहासपुराणं पञ्चमम्'* इति । तैः

---

*छा. ७-१-२.

**आख्यानपञ्चमैः वेदैः भूयिष्ठं** अत्यर्थं **कत्थ्यते** श्लाघ्यते बहु-मन्यते सर्वस्मादधिकोहमि[1]ति । कथ्यते इति केचित्पठन्ति । आख्यानपञ्चमैर्वेदैः कश्चिज्जनः पञ्चवेदीनि कथ्यत इत्यर्थः । **तथा चान्ये चतुर्वेदाः त्रिवेदाः अपरे द्विवेदाः एकवेदाश्च अनृचश्च तथाऽपरे** परित्यक्तऋगादिवेदा अपरे । **एतेषु मनुष्येषु अधिकं श्रेष्ठं ब्रूहि यमहं ब्राह्मणं वेद** विद्याम् ॥ २९–३६ ॥

यः एव स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनाऽवस्थितः स एव ब्राह्मण इति दर्शयिष्यन् तद्व्यतिरिक्तस्य सर्वस्य तदज्ञानमूलत्वं दर्शयति—

**एकवेदस्य चाज्ञानाद्वेदास्ते बहवोऽभवन् ।**
**सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ॥३७॥**

एकस्य वेदस्य—वेद्यमिदंरूपं अनिदंरूपं, वेदनं वेदः—एकस्याद्वितीयस्य संविद्रूपस्येत्यर्थः । तस्य **एकवेदस्य** ब्रह्मणोनवगमादृगादयो **वेदाः बहवोऽभवन्** । अत्र ऋगादयो वेदाः तत्प्रतिपत्त्यर्थं विचारं कुर्वन्ति इति वेदाख्यानमवापुः । अथवा—सद्भावं साधयन्तीति वेदाः । विदन्ति वेदनसाधनभूता इति वा वेदाः । अथ वा—ब्रह्माधीनमात्मानं लभन्त इति वा वेदाः । अथवा—ब्रह्मण आत्मतया लाभहेतव इति वा वेदाः । विद विचारणे, विद सत्तायाम्, विद ज्ञाने, विदॢ लाभे, एतेषां धातूनां विषये वर्तन्ते यस्मात्ततो वेदा इत्युक्ताः । तदेकवेदस्वरूपं किमिति चेत् ?—'सत्यं ज्ञानमनन्तं ब्रह्म'* इति श्रुतेः[2] ।

---

[1]यमि. *तै. उ. २-१.

[2]...चेत् 'सत्य ज्ञानमनन्तं ब्रह्म' 'एकमेवाद्वितीय' इत्यस्य श्रुतिप्रतिपाद्यैकस्य ब्रह्मणस्सिद्धत्वान्न चाशङ्केत्यर्थः. [इति पाठान्तरम्.]

तस्मात् **सत्यस्य** एकवेदस्वरूपस्य ब्रह्मणोनवगमाद्वेदा बहवो व्याख्याताः सर्वे वेदास्तदर्थदर्शनहेतवः । हे **राजेन्द्र** ! त्वमपि किमेवं ज्ञात्वा सत्येव ब्रह्मणि स्थितोसि? **कश्चित्** पुनः **सत्ये अवस्थितः** प्रतिष्ठित इति ॥ ३७ ॥

भूयो मे शृणु—

***य एवं वेद तत्सत्यं प्राज्ञो भवति नित्यदा ।**
**दानमध्ययनं यज्ञो लोभादेव प्रवर्तते ॥ ३८ ॥**

किमर्थं? नो चेत्तत्र यद्भवति तच्छृणु*—

**सत्यात्प्रच्यवमानानां सङ्कल्पा वितथाऽभवन् ।**
**ततः कर्म प्रतायेत सत्यस्यानवधारणात् ॥ ३९ ॥**

**सत्यात्** सत्यज्ञानादिलक्षणात् ब्रह्मणः **प्रच्यवमानानां** स्वाभाविकब्रह्मभावपरित्यागेन अनात्मनि देहादावात्मभावमापन्नानां **संकल्पा वितथा अभवन्** व्यर्था भवन्ति, स्वाभाविकसत्यसङ्कल्पादयो न सिद्ध्यन्तीत्यर्थः । **ततः कर्म** यज्ञादिकं **प्रतायेत** विस्तृतं भवेत् । तदेतत्सर्वं **सत्यस्य** सत्यादिलक्षणस्य ब्रह्मणः **अनवधारणात्** अनवगमात् आत्माज्ञाननिमित्तत्वात् संसारस्य यावत्परमात्मानमात्मत्वेन साक्षान्न विजानाति तावदयं तापत्रयाभिभूतो मकरादिभिरिव रागादिभिरितस्ततस्समाकृष्यमाणो मोमुह्यमानोऽसत्यसंकल्पः स्वर्गपश्वन्नादिहेय[1]साधनेषु वर्तत इत्यर्थः ॥ ३८ ॥ ३९ ॥

---

* एताच्चिह्नमध्यगतः मूलश्लोकः उत्तरश्लोकावतारिका च एकस्मिन्नेव कोशे दृश्यते । तच्छ्लोकपूर्वार्धं—एवं वेदमविज्ञाय प्राज्ञोहमिति मन्यते इति नीलकण्ठीयव्याख्यानुसारि.

[1]स्वर्गपश्वादीन्द्रियार्थ.

इदानीं ब्राह्मणलक्षणमाह—

**विद्याद्बहुपठं तं तु बहुवागिति ब्राह्मणम् ।**
**य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ॥४०॥**

**बहुपठं तं** आख्यानपञ्चमवेदाध्यायिनं **बहुवागिति विद्यात्** न साक्षात् ब्राह्मणमिति । कस्तर्हि मुख्यो ब्राह्मण इति चेत्—**य एव सत्यात्** सत्यादिलक्षणात् **नापैति** स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनैवावतिष्ठत इत्यर्थः । **सः एव ज्ञेयो ब्राह्मणस्त्वया,** नेतरः यस्सत्यात्प्रच्युतोऽकृतार्थस्सन् कर्मणि प्रवर्तते । तथा च ब्रह्मविदमेव ब्राह्मणं दर्शयति श्रुतिः—'मौनं चामौनं च निर्विद्याऽथ ब्राह्मणस्स ब्राह्मणः'* इति । 'विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति'† इति च ॥४०॥

भवेदेतदेव यदि तदेव ब्रह्म सिद्ध्येत्, न च सिद्ध्यति, अन्यपरत्वाद्वेदस्य इति, तत्राह—

**छन्दांसि नाम द्विपदां वरिष्ठ**
**स्वच्छन्दयोगेन भवन्ति तत्र ।**
**छन्दोविदस्तेन च तानधीत्य**
**गता हि वेदस्य न वेद्यमार्याः ॥ ४१ ॥**

हे **द्विपदां वरिष्ठ**! छन्दांसि वेदाः **स्वच्छन्दयोगेन,** स्वच्छन्दता स्वाधीनता, यथाकाममित्यर्थः । **तत्र** परमात्मनि **भवन्ति** तत्रैव प्रमाणं भवन्ति । श्रूयते च—'सर्वे वेदा यत्पदमामनन्ति'‡

*बृ. ५-५-१. †बृ. ६-४-२३. ‡कठ. २-१५.

इति । 'वेदैश्च सर्वैरहमेव वेद्यः '* इति च । पुरुषार्थपर्यवसायित्वाद्वेदस्य तद्व्यतिरिक्तस्य सर्वस्य अनित्याशुचिदुःखानुविद्धत्वेन पुरुषार्थत्वाभावात् तत्स्वरूपतज्ज्ञानतत्साधन †प्रतिपादकत्वेन वेदानां प्रामाण्यमित्यर्थः । यस्मात् वेदाः स्वच्छन्दयोगेन तत्रैव परमात्मनि प्रमाणं भवन्ति तेन च हेतुना तान् वेदान्, **अधीत्य** अधिगम्य वेदान्तश्रवणादिकं कृत्वा **गताः** प्राप्ताः **वेदस्य** संविद्रूपस्य परमात्मनः स्वरूपं न **वेद्यं** प्रपञ्चं **आर्याः** पण्डिता-ब्रह्मविदः ॥ ४१ ॥

एवं तर्हि वेदवेद्यत्वे

**अन्यदेव तद्विदितादथो अविदितादधि ।‡**
**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।§**

इत्यादिश्रुतिविरोधः प्रसज्येतेत्याशङ्क्याह—

**न वेदानां वेदिता कश्चिदस्ति**
**वेदेन वेदं न विदुर्न वेद्यम् ।**
**यो वेद वेदं स च वेद वेद्यं**
**यो वेद वेद्यं न स वेद सत्यम् ॥ ४२ ॥**

**न वेदानां** ऋगादीनां मध्ये **कश्चिदपि** वेदः परमात्मनो वाचामगोचरस्य संविद्रूपस्य **वेदिता** अस्ति । कस्मात्? यस्मात् **वेदेन** ऋगादिरूपेण जडेन **वेदं** संविद्रूपं परमात्मानं **न विदुः न वेद्यं** प्रपञ्चमपि वेद्यं न विदुः, संविदधीनत्वात्सर्वसिद्धेः । यस्मात्

---

*भग. १५-१५. †तत्स्वरूपतत्साधनं.
‡केन. १-३. §तै. उ. २-४

संविदधीना सर्वसिद्धिः तस्मात् **यो वेद** जानाति **वेद्यं** संविद्रूपं परमात्मानं **स च वेद वेद्यं** इदं सर्वम्। तथा च श्रुतिः—'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्'* इति। **यो वेद वेद्यं** इदं रूपं **न** स **वेद** न जानाति सत्यं सत्यादिलक्षणं परमात्मानम्॥ ४२॥

नन्वेवं तर्हि वेदेन वेद्यं न विदुर्न वेद्यं इति वदता अनात्मविदः प्रपञ्चासिद्धिरेवेत्युक्तं भवति इत्याशङ्क्याह—

**यो वेद वेदान् स च वेद वेद्यं**
**न तं विदुर्वेदविदो न वेदाः।**
**तथाऽपि वेदेन विदन्ति वेदं**
**ये ब्राह्मणा वेदविदो भवन्ति॥ ४३॥**

**यो वेद** जानाति **वेदान्** ऋगादीन् **स च वेद वेद्यं** सोपि अनात्मविदेव भिन्नेन[1] संवेदनेन वेद्यं प्रपञ्चं वेद। नन्वेवं तर्हि वेद्यवत् परमात्मानमपि जानीयादित्याशङ्क्याह—**न तं** परमात्मानं वाचामगोचरं **विदुः वेदविदो न वेदाः** वेदा अपि न तं विदुः न तं विषयीकुर्वन्तीत्यर्थः[2]। नन्वेवं तर्हि कथमौपनिषदं ब्रह्म स्यादित्याशङ्क्याह[3]—**तथाऽपि वेदेन विदन्ति वेदं** परमात्मानं यद्यपि वागाद्यविषयं ब्रह्म तथाऽपि वेदेन ऋगादिना विदन्ति विजानन्ति वेद्यं संविद्रूपं परमात्मानम्। के ते? **ये ब्राह्मणा वेदविदो भवन्ति** वेदानां वेदप्रतिपादनप्रकारं[4] जानन्तीत्यर्थः॥ ४३॥

---

[1]अनात्मवदविच्छिन्नेन. [2]र्थः। कथं चिल्लक्षणया बोधयन्तीति भावः. [3]स्यान्नेत्याह. [4]वेदानां उपनिषद्वाक्यानां उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तिरूपषड्विधलिङ्गेन जहदजहल्लक्षणया 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इत्यादिना सवेदस्य संविद्रूपस्य परमात्मनः प्रतिपादनप्रकारः. [इति मुबापुस्मुद्रितकोशपाठः].

*बृह. ४-४-५.

कथं तर्ह्यविषयमेव ब्रह्म वेदाः प्रतिपादयन्तीत्याशंक्याह—

**यामांशभागस्य[1] तथा हि वेदाः**
**यथा हि शाखा च महीरुहस्य ।**
**संवेदनेऽप्येवमथामनन्ति**
**तस्मिन् हि नित्ये परमात्मनोर्थे ॥ ४४ ॥**

**यामांशभागस्य** 'त्रियामश्चन्द्रः'[2] इति श्रुते' चन्द्रांशभागस्य प्रतिपच्चन्द्रकलादर्शने यथा **महीरुहस्य** वृक्षस्य शाखाहेतुर्भवति **तथा हि वेदाः** तथैव **परमात्मनः** स्वरूपभूते **संवेदने नित्ये** अविनाशिनि **अर्थे** परमपुरुषार्थस्वरूपे पूर्णानन्दरूपे हेतवो भवन्ति, न पुनस्साक्षाद्वाचामगोचरं परमात्मानं प्रतिपादयन्तीत्येवं **आमनन्ति** ॥ ४४ ॥

य एवं वेदाना वेदरूपात्मप्रतिपादनप्रकारमवगम्य व्याचष्टे सोपि ब्राह्मण इत्याह—

**अभिजानामि ब्राह्मणमाख्यातारं विचक्षणम् ।**
**एवं योभिविजानाति स जानाति परं हि तत्॥४५**

यो वेदप्रतिपादनप्रकार व्याचष्टे त **आख्यातारं विचक्षणं ब्राह्मण अभिजानामि** । ननु बाल्यं पाण्डित्यादिकं निर्विद्यावस्थितमेव ब्रूते ब्राह्मणं 'अथ ब्राह्मण'* इति, कथमुच्यते **अभिजानामि ब्राह्मणमाख्यातारं विचक्षणम्** । इति ? तत्राह—**एवं** वेदानां वेदनरूपात्मप्रतिपादनप्रकारं मयोक्तं **योभिविजानाति स जानाति परं हि तत्** परं ब्रह्म जानाति इत्येव ।

---

[1] धामांशभागस्य.    [2] 'रात्रिधामा चन्द्रः'    *बृह. ५-५-१.

यो हि पाण्डित्यं निर्विद्य व्यवस्थितः सः क्षिप्रं बाल्यादिकं निर्विद्य ब्राह्मणो भवतीत्यर्थः ॥ ४९ ॥

यस्मात्सत्यनिष्ठस्यैव ब्राह्मणत्वप्रसिद्धिः तस्मात् विषयपरो न भवेदित्याह—

**नास्य पर्येषणं गच्छेत्प्रत्यर्थिषु कदा चन ।**
**अविचिन्वन्निमं वेदे ततः पश्यति तं प्रभुम् ॥ ४६**

**विषयाश्चेन्द्रियाण्येव देहोहङ्कार एव च ।**
**बाह्या आभ्यन्तरा घोराश्शत्रवो योगिनस्स्मृताः ॥**

इति दर्शनात् **नास्य** आत्मनः **प्रत्यर्थिषु** प्रतिपक्षभूतेषु देहेन्द्रियशब्दादिविषयेषु **पर्येषणं** परित एषणं **गच्छेत्** विषयान्वेषणपरो न भवेदित्यर्थः । **अविचिन्वन्** विषयसञ्चयमकुर्वन् **इमं** प्रत्यगात्मानं **वेदे** उपनिषत्सु तत्त्वमस्यादिवाक्येषु **ततः** पश्चात् **पश्यति तं प्रभुं** परमात्मानं आत्मत्वेन जानातीत्यर्थः । अथवा —नास्यात्मनः पर्येषणं अन्वेषणं गच्छेत् प्रत्यर्थिषु प्रतिपक्षभूतदेहेन्द्रियादिषु, देहेन्द्रियतद्धर्मानात्मत्वेन न गृह्णीयादित्यर्थः । **अविचिन्वन्** देहेन्द्रियतद्धर्मानात्मत्वेनासंचिन्वन् तत्साक्षिणमात्मानमेव प्रतिपद्यमानः तत्त्वम्पदार्थशोधनानन्तरं **इमं** प्रमात्रादिसाक्षिणं परमात्मानं **पश्यति** देहेन्द्रियतद्धर्मानात्मत्वेनाप्रतिपद्यमानस्तत्त्वमस्यादिवाक्यैः परमात्मानमात्मत्वेन पश्यतीत्यर्थः ॥४६॥

**तूष्णीम्भूत उपासीत न चेच्छेन्मनसा अपि ।**
**अभ्यावर्तेत ब्रह्मास्मै बह्वनन्तरमाप्नुयात् ॥ ४७ ॥**

यस्मात् सर्वविषयपरित्यागेनैव आत्मदर्शनसिद्धिः तस्मात् तूष्णी-

**म्भूतः** सर्वकर्मसंन्यासं कृत्वा स्वात्मव्यतिरिक्तं सर्वं परित्यज्य केवलो भूत्वा स्वात्मानमेव लोकं **उपासीत, न चेच्छेन्मनसा अपि** विषयेच्छां न कुर्यात् । यस्तूष्णींम्भूतः विषयोपसंहारं[1] कृत्वा स्वात्मानमेव लोकं उपास्ते अस्मै तूष्णींभूताय ब्राह्मणाय **ब्रह्म** अपूर्वादिलक्षणं **अभ्यावर्तेत** अभिमुखीभवेदित्यर्थः । श्रूयते च—

**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ।***

इति । **अनन्तरं** आविर्भूतस्वरूपस्सन् **बहु** भूमानं तमसः पारं परं आत्मानं **आप्नुयात्** इत्यर्थः ॥ ४७ ॥

मुनिरप्येष एवेत्याह—

**मौनाद्धि मुनिर्भवति नारण्यवसनान्मुनिः ।**
**अक्षरं तं तु यो वेद स मुनिश्रेष्ठ उच्यते ॥४८॥**

**मौनात्** पूर्वोक्तात् तूष्णीम्भावादेव **मुनिर्भवति न** पुनः **अरण्यवसन**मात्रात् **मुनिः** भवति । तेषामपि तूष्णीम्भूतानां मध्ये **यस्तु** पुनः **अक्षरं** अविनाशिनं **तं** परमात्मानं **वेद** ‘अयमहमस्मि’ इति साक्षाज्जानाति **स मुनिश्रेष्ठ उच्यते** । श्रूयते च—‘एतमेव विदित्वा मुनिर्भवति*’ इति ॥ ४८ ॥

वैयाकरणोऽप्येष एवेत्याह—

**सर्वार्थानां व्याकरणात् वैयाकरण उच्यते ।**
**तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥ ४९ ॥**

**सर्वार्थानां व्याकरणात् वैयाकरण उच्यते** । न पुनश्शब्दैकदेशव्याकरणात् वैयाकरणो भवति । भवतु सर्वार्थानां व्या-

---

[1] विक्षायु.

*कठ. २-२३.

करणात् वैयाकरणत्वं, ततः किमिति चेत्—**तन्मूलतो व्याकरणं** पूर्वोक्तादक्षराद्धि सर्वस्य नामरूपप्रपञ्चस्य व्याकरणम् । श्रूयते च—'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति । तस्माद्ब्रह्मण एव साक्षाद्वैयाकरणत्वम् । **व्याकरोतीति तत्तथा** असावपि विद्वान् तत् ब्रह्म तथैव व्याकरोतीति वैयाकरणः ॥४९

सर्वज्ञोप्येष एवेत्याह—

**प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।**
**सत्ये वै ब्रह्मणि तिष्ठन्[1] तद्विद्वान् सर्वविद्भवेत् ॥५०**

**प्रत्यक्षदर्शी लोकानां** यः प्रत्यक्षेण जगदीन् लोकान् पश्यति **सर्वदर्शी नरो भवेत्** सर्वरूपं[2] परमात्मानं पश्यति । असौ पुनः **सत्ये** सत्यादिलक्षणे **ब्रह्मणि तिष्ठन्** मनस्समादधाति । **तद्विद्वान्** सत्यादिलक्षणं ब्रह्म विद्वान् आत्मत्वेन जानन् **सर्वविद्भवेत्** सर्वं जानातीत्यर्थः । तस्मादेष एव साक्षात् सर्वज्ञः नानात्ममात्रदर्शी ॥ ५० ॥

**यस्त्वेतेभ्यः** इत्यादिना उक्तमेवार्थं पुनरपि दर्शयति अवश्यकर्तव्यत्वप्रदर्शनार्थम्—

**ज्ञानादिषु स्थितोप्येवं क्षत्रिय ब्रह्म पश्यति ।**
**वेदानां चारपूर्वेण चैतद्विद्वन् ब्रवीमि ते ॥ ५१ ॥**

**ज्ञानादिषु** 'ज्ञानं च' इत्यादिना पूर्वोक्तेषु स्थितोप्येवं यथा सत्ये तिष्ठन् **ब्रह्म पश्यति** एवमेव ब्रह्म पश्यति । **वेदानां चारपूर्वेण** वेदान्तश्रवणपूर्वकमि[3]त्यर्थः । अथवा—गुणा-

[1] ब्रह्मणस्तिष्ठन्. [2] सर्वकारणरूपं. [3] श्रवणादेकेन.

न्तरविधानमेतत्—ज्ञानादिषु स्थितोपि न केवलं तावन्मात्रेण पश्यति, अपि तु एवमेव वक्ष्यमाणप्रकारेण वेदान्तविचारपूर्वेण वेदान्तश्रवणादिपूर्वकमेव पश्यति ब्रह्म । एतत् वेदान्तानां विचारप्रकारं हे विद्वन् ब्रवीमि ते वक्ष्यामीत्यभिप्रायः ॥९१॥

इति सनत्सुजातीयविवरणे द्वितीयोध्यायः.

---

इदानीं ब्रह्मचर्यादिसाधनानन्तरं तत्प्राप्यं च ब्रह्म प्रतिपादयितुं तृतीयचतुर्थावारभ्येते । तत्र तावद्ब्रह्मचर्यादिसाधनं श्रुत्वा तद्ब्रह्म-वेदनाकांक्षी प्राह धृतराष्ट्रः—

**धृतराष्ट्र उवाच—**

**सनत्सुजात यदिमां परार्थां**
**ब्राह्मीं वाचं वदसि हि विश्वरूपाम् ।**
**परां हि कार्येषु सुदुर्लभां कथां**
**प्रब्रूहि मे वाक्यमेवं कुमार ॥ १ ॥**

हे **सनत्सुजात यत्** यस्मात् **इमां परार्थां** उत्कृष्टार्थां **ब्राह्मीं** ब्रह्मसंबन्धिनीं **वाचं वदसि हि विश्वरूपां** नानारूपां **परां** उत्तमां **कार्येषु** कार्यवर्गेषु प्रपञ्चेषु **सुदुर्लभां** श्रवणाया-प्यशक्यां **कथां प्रब्रूहि मे वाक्यमेवम्भूतं कुमार !** यस्मात्त्वं ब्राह्मीं वाचं परमपुरुषार्थसाधनभूतां सुदुर्लभां वदसि, तस्मात्त्वमेव वक्तुमर्हसीत्यभिप्रायः ॥ १ ॥

**एवं पृष्टः प्राह भगवान्—**

सनत्सुजात उवाच—

नैतद्ब्रह्म त्वरमाणेन लभ्यं
यन्मां पृच्छस्यभिषङ्गेण राजन् ।
बुद्धौ प्रलीने मनसि प्रचिन्त्या
विद्या हि सा ब्रह्मचर्येण लभ्या ॥ २ ॥

नैतद्ब्रह्म त्वरमाणेन पुरुषेण लभ्यं यत् ब्रह्म मां पृच्छस्यभिषङ्गेण राजन् । कथं तर्हि लभ्यमित्याह—बुद्धौ अध्यवसायात्मिकायां प्रलीने मनसि प्रचिन्त्या विद्या हि सा यदा पुनः[1] सङ्कल्पविकल्पात्मकं मनो विषयेभ्यः परावृत्य स्वात्मन्येव निश्चलं भवतीत्यर्थः । येयं बुद्धौ प्रलीने मनसि प्रचिन्त्या सा विद्या ब्रह्मचर्येण वक्ष्यमाणेन लभ्या ॥ २ ॥

किञ्च—

आद्यां विद्यां वदसि हि सत्यरूपां
या प्राप्यते ब्रह्मचर्येण सद्भिः ।
यां प्राप्यैनं[1] मर्त्यभावं त्यजन्ति
या वै विद्या गुरुवृद्धेषु नित्या ॥ ३ ॥

आद्यां सर्वादिभूतब्रह्मविषयां विद्यां वदसि हि सत्यरूपां परमार्थरूपां मे ब्रूहीति । यद्वा—आद्या अकार्यभूता असत्यप्रपञ्चाविषयां विद्यां वदसि । तस्मादत्वरमाणेन ब्रह्मचर्यादिसाधनोपेतेन उपसंहृतान्तःकरणेनैव लभ्येत्यर्थः । या प्राप्यते ब्रह्म-

1 'यदा पुनः' इति केषुचित्कोशेषु नास्ति.

चर्येण सद्भिः यां प्राप्यैनं[1] मर्त्यभावं त्यजन्ति या वै विद्या-गुरुवृद्धेषु गुरुणा विद्याप्रदानादिना वर्धितेषु शिष्येषु नित्या नियता ॥ ३ ॥

एवमुक्ते ब्रह्मचर्यविज्ञानायाह धृतराष्ट्रः—

धृतराष्ट्र उवाच–

**ब्रह्मचर्येण या विद्या शक्या वेदितुमञ्जसा ।**
**तत्कथं ब्रह्मचर्यं स्यादेतद्विद्वन्ब्रवीहि मे ॥ ४ ॥**

या विद्या ब्रह्मचर्येण वेदितुं शक्या तत् साधनभूतं ब्रह्मचर्यं कथं स्यात् । एतत् ब्रह्मचर्यं विद्वन् ! ब्रवीहि मे ॥४॥

एवं पृष्टः प्राह भगवान्—

सनत्सुजात उवाच–

**आचार्ययोनिमिह ये प्रविश्य**
**भूत्वा गर्भं ब्रह्मचर्यं वदन्ति ।**
**इहैव ते शास्त्रकारा भवन्ति**
**विहाय देहं परमं यान्ति सत्यम् ॥५॥**

**आचार्ययोनिमिह ये प्रविश्य** आचार्यसमीपं गत्वेत्यर्थः । **भूत्वा गर्भं** उपसदनादिना शिष्या भूत्वा **ब्रह्मचर्यं** गुरुशुश्रूषादिकं **चरन्ति** कुर्वन्ति **इहैव** अस्मिन् लोके **शास्त्रकारा भवन्ति** । शास्त्रकर्तारः पण्डिताः ततो बाल्यादिकं निर्विद्य ब्राह्मणा भूत्वा

---

[1]प्राप्यैव.

आरब्धकर्मक्षये विहाय देहं परमं यान्ति सत्यं सत्यादिलक्षणं परमात्मानं प्राप्नुवन्ति ॥ ५ ॥

किञ्च—

**अस्मिन् लोके विजयन्तीह कामान्**
**ब्राह्मीं स्थितिमनुतितिक्षमाणाः ।**
**त आत्मानं निर्हरन्तीह देहान्**
**मुञ्जादिषीकामिव धीरभावात् ॥ ६ ॥**

अस्मिन्लोके विजयन्तीह कामान् ब्राह्मीं एव स्थितिं ब्रह्मण्येव स्थितिं अनुतितिक्षमाणाः अनुदिनं क्षममाणाः त आत्मानं देहेन्द्रियादिभ्यो निष्कृष्य तत्साक्षिणं चिन्मात्रं निर्हरन्ति पृथक्कुर्वन्ति । किमिव?—मुञ्जादिषीकामिव यथा मुञ्जादिषीकामन्तस्था निर्हरन्ति एवं कोशपञ्चकेभ्यो निष्कृष्य सर्वात्मानं प्रतिपद्यन्त इत्यर्थः । केन—धीरभावात् धैर्येण । श्रूयते च कठवल्लीषु—

> अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।
> तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिषीकां धैर्येण तं विद्याच्छुक्रममृतम् ॥*

इति ॥ ६ ॥

'आचार्ययोनिमिह' इत्यत्र आचार्यस्य योनित्वं दर्शितम् । तत्कथं मातापितृव्यतिरेकेणाचार्यस्य योनित्वमित्याशङ्क्य स एव साक्षाज्जनयितेत्याह—

---

*कठ. ६-१७.

**शरीरमेतौ कुरुतः पिता माता च भारत।**
**आचार्यतस्तु यज्जन्म तत्सत्यं वै तथाऽमृतम् ॥७॥**

**शरीरं** इह अस्य **एतौ** मातापितरौ **कुरुतः**, नात्मानं स्वरूपेण जनयतः। यदिदं देहद्वयात्मना जन्म तदसत्यम्। **आचार्यतः तु यत्** इदं चित्सदानन्दाद्वितीयब्रह्मात्मना[1] **जन्म तत्सत्यं** परमार्थभूतं **तथा** एव **अमृतं** विनाशवर्जितम्। तस्मात्स एव[2] जनयितेत्यर्थः। श्रूयते च प्रश्नोपनिषदि 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि'* इति। तथा चाहापस्तम्बः—'स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः'† इति॥ ७॥

यस्मादाचार्याधीना परमपुरुषार्थसिद्धिः तस्मात्—

**स आवृणोत्यमृतं संप्रयच्छन्**
**तस्मै न द्रुह्येत् कृतमस्य जानन्।**
**गुरुं शिष्यो नित्यमभिवादयीत**
**स्वाध्यायमिच्छेच्च सदाऽप्रमत्तः॥ ८॥**

**स आवृणोति** आपूरयति **अमृतं** पूर्णानन्दं ब्रह्म आत्मत्वेन **संप्रयच्छन् तस्मै** आचार्याय **न द्रुह्येत्** द्रोहं नाचरेत्। तथा च श्रुतिः—

**यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥‡**

---

[1] ब्रह्मज्ञानात्मना विद्यया. [2] स एव साक्षात्.

*प्रश्न, ६.८. †आप. ध १.१.१६ ‡श्वे. ६.२३.

तथा चापस्तम्बः—'तस्मै न द्रुह्येत्कदाचन । स हि विद्यातस्तं जनयति'* इति । कृतमस्य जानन्—अस्येति तृतीयार्थे षष्ठी—अनेनात्मनः कृतमुपकारं विजानन् । किं तर्हि कर्तव्यमित्याह—गुरुं शिष्यो नित्यमभिवादयीत देवमिवाचार्यमुपासीत । तथा च श्रुतिः—

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**†

इति । तथा—**स्वाध्यायमिच्छेच्च** श्रवणादिपरो भवेत् **सदा अप्रमत्तः** अप्रमादी सन् ॥ ८ ॥

इदानीं चतुष्पाद्ब्रह्मचर्यमाह श्लोकचतुष्टयेन—

**शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यच्छुचिः ।**
**ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ॥ ९ ॥**

शिष्यवृत्तिक्रमेणैव 'आचार्ययोनिमिह' इत्यादिनोक्तक्रमेण शुचिः विद्यामाप्नोति यत्तत् ब्रह्मचर्यं तस्यास्य[1] प्रथमः पाद उच्यते ॥ ९ ॥

**यथा नित्यं गुरौ वृत्तिः गुरुपत्न्यां तथा चरेत् ।**
**तत्पुत्रे च तथा कुर्वन् द्वितीयः पाद उच्यते ॥ १० ॥**

स्पष्टार्थः श्लोकः । तथा चोक्तम्—'आचार्यवदाचार्यदारेषु वृत्तिः' 'आचार्यवदाचार्यपुत्रे वृत्तिश्च'*इति ॥ १० ॥

**आचार्येणात्मकृतं विजानन्**
**ज्ञात्वाचार्थं भावितोऽस्मीत्यनेन ।**

---

*आ-ध, १-१-१५,१६. ७-२७, ३०. †श्वे. ६-२३. [1]ब्रह्मचर्यस्यास्य.

**यन्मन्यते तं प्रति हृष्टबुद्धिः**
**स वै तृतीयो ब्रह्मचर्यस्य पादः ॥ ११ ॥**

**आचार्येणात्मकृतं** आत्मनः कृतं उपकारं **विजानन् ज्ञात्वा अर्थं** वेदार्थं परमपुरुषार्थं ज्ञात्वा च अवगम्य **भावितोस्मीत्यनेन** भावितोस्मीति स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मना यथावदुत्पादितोस्मीति चिन्तयन् तं आचार्यं **प्रति हृष्टबुद्धिः** सन् यत्[1] आत्मनः कृतार्थत्वं मन्यते स वै तृतीयो ब्रह्मचर्यस्य पादः ॥११॥

**आचार्याय प्रियं कुर्यात्प्राणैरपि धनैरपि ।**
**कर्मणा मनसा वाचा चतुर्थः पाद उच्यते ॥ १२ ॥**

स्पष्टोर्थः ॥ १२ ॥

इदानीं चतुष्पदीं विद्यां दर्शयति—

**कालेन पादं लभते तथाऽयं**
**तथैव[1] पादं गुरुयोगतश्च ।**
**उत्साहयोगेन च पादमृच्छेत्**
**शास्त्रेण पादं च ततोभियाति ॥ १३ ॥**

अत्र क्रमो न विवक्षितः । प्रथमं **गुरुयोगतः** ततः **उत्साहयोगेन** बुद्धिविशेषप्रादुर्भावेन ततः **कालेन** बुद्धिपरिपाकेन[2] ततः **शास्त्रेण** सहाध्यायिभिस्तत्त्वविचारेण । तथा चोक्तम्—

**आचार्यात्पादमादत्ते पादं शिष्यस्स्वमेधया ।**
**कालेन पादमादत्ते पादं सब्रह्मचारिभिः ॥**

इति[3] ॥ १३ ॥

---

[1]तथार्थ.    [2]केन तथार्थमिति पादविशेषण ।

[3]एतत्पर्यन्तदशश्लोकव्याख्यास्थाने केषुचित्कोशेषु 'स्पष्टोर्थः' इत्येव दृश्यते ।

ज्ञानदीनामाचार्यसन्निधाने फलसिद्धिरित्याह—

**ज्ञानादयो द्वादश यस्य रूप-**
**मन्यानि चाङ्गानि तथा बलं च ।**
**आचार्ययोगे फलतीति चाहु-**
**र्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥ १४ ॥**

**ज्ञानादयः** 'ज्ञानं च' इत्यादिना पूर्वोक्ता **द्वादश** गुणा **यस्य** पुरुषस्य स ज्ञानादयः[1] **रूपं अन्यानि चाङ्गानि** 'श्रेयांस्तु षड्विधस्त्यागः' 'सत्यं ध्यानं' इति श्लोकद्वयोक्तानि **तथा बलं च** तद्धर्मपरिपालनसामर्थ्यं च सर्वं **आचार्ययोगे** एव **फलति** नाचार्ययोगं विना फलति । श्रूयते च—'आचार्याद्धैव विद्या विदिता'* इति, 'आचार्यवान्पुरुषो वेद'† इति च । **ब्रह्मार्थयोगेन च ब्रह्म-चर्यं** यदिदं गुरुसन्निधौ शुश्रूषाद्याचरणं तद्ब्रह्मचर्यं ब्रह्मार्थयोगेन फलति स्वात्मनः चित्सदानन्दाद्वितीयब्रह्मैक्यसंपादनद्वारेण फलतीत्यर्थः ॥ १४ ॥

ब्रह्मचर्यस्तुतिं करोति द्वाभ्याम्—

**एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।**
**ऋषयश्च महाभागा ब्रह्मचर्येण चाभवन् ॥ १५ ॥**
**एतेनैव सगन्धर्वा रूपमप्सरसोऽजयन् ।**
**एतेन ब्रह्मचर्येण सूर्य अह्नाय जायते ॥ १६ ॥**

---

[1] 'सः ज्ञानादयः' इति केषु चित्कोशेषु नास्ति.

*छा. ४-९-३. †छा. ६-१४-२.

**देवा देवत्वं एतेन प्राप्नुवन्** । **ऋषयोपीह** ऋषित्वमेतेन प्राप्ताः । **सगन्धर्वाः** गन्धर्वैस्सह वर्तमाना **रूपमप्सरसोऽजयन्** रूपाणि स्वर्गीयानि एतेन ब्रह्मचर्येण अजयन् । अह्नो दीप्तिसमूहः अह्नाय जगतो द्योतनाय **सूर्यश्च जायते** । उक्तं च—'अह्नो दीप्तिश्च कथ्यते ।' इति ॥ १५–१६ ॥

कथमेकस्य ब्रह्मचर्यस्यानेकविधफलसाधकत्वं इत्यत आह—

**आकांक्षार्थस्य संयोगाद्रसभेदार्थिनामिव ।**
**एवं ह्येतत्समाज्ञाय तादृग्भावं गता इमे ॥ १७ ॥**

यथा चिन्तामण्यादयो **रसभेदार्थिनामिव आकांक्षार्थस्य संयोगात्** तत्तदाकाङ्क्षितमर्थं प्रयच्छन्ति । **एवं एतत्** ब्रह्मचर्यमाकांक्षार्थस्य संयोगात्तत्तदाकांक्षितं प्रयच्छतीति ज्ञात्वा तत्तत्फलार्थं ब्रह्मचर्यं चरित्वा **तादृग्भावं** तादृशं भावं **गतास्तु इमे** देवादयः । यस्मादाचार्यसन्निध्यनुष्ठितात् ब्रह्मचर्यात् परमपुरुषार्थप्राप्तिः तस्मादाचार्ययोनिं प्रविश्य गर्भो भूत्वा ब्रह्मचर्यं चरेदित्यर्थः ॥ १७ ॥

नन्वेवं ज्ञाननिष्ठता यदि ज्ञानस्यैव पुरुषार्थत्वं भवेत् अपि तु कर्मण एवे[1]त्याशङ्क्याह—

**अन्तवन्तः क्षत्रिय ते जयन्ति**
**लोकान् जनाः कर्मणा निर्मितेन ।**

---

[1]नन्वेवं ज्ञानस्यैव पुरुषार्थत्वं भवेत् अपि तु कर्मणोते

**ज्ञानेन विद्वांस्तेज अभ्येति नित्यं**
**न विद्यते ह्यन्यथा तस्य पन्थाः ॥१८॥**

हे क्षत्रिय! अन्तवन्तः अन्तवतो लोकान् पितृलोकदेवलोकादीन् ते जयन्ति, नानन्तं स्वात्मभूतं परमात्मानं लोकं जयन्ति । केन तर्ह्यनन्तलोकप्राप्तिरित्याशङ्कयाह—**ज्ञानेन विद्वान् तेज अभ्येति नित्यं** नित्यमविनाश्यात्मभूतमेव अभ्येति **तेजः** ज्योतिः न कर्मणा । कस्मात्पुनर्ज्ञानेनैवाभ्येति ? तत्राह—**न विद्यते ह्यन्यथा तस्य पन्थाः** तस्य पूर्णानन्दज्योतिषो ज्ञानमेकं मुक्त्वाऽन्यः पन्था मार्गो नास्त्येव । श्रूयते च—

तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।* इति॥१८

ज्ञानेन विद्वान् यद्ब्रह्म पश्यति तत्किमिवाभातीति प्राह धृतराष्ट्रः—

**धृतराष्ट्र उवाच—**

**आभाति शुक्लमिव लोहितमिवाथो**
**कृष्णमथार्जुनं काद्रवं वा ।**
**यद्ब्राह्मणः पश्यति यत्र विद्वान्**
**कथं रूपं तदमृतमक्षरं परम् ॥ १९ ॥**

ज्ञानेन **यद्विद्वान् पश्यति** ब्रह्म तत् किं **शुक्लमिव आभाति लोहितमिव** आभाति **कृष्णं** इव **अर्जुनं काद्रवं** इव आभाति **यत्र** देशे भाति **कथं रूपं तदमृतमक्षरं परं** ब्रह्म[1] ॥ १९ ॥

---

*श्वेता. ६–१५.

[1] 'तत्कथं रूपं कीदृग्रूपमिति रूपप्रश्नः. यत्र पश्यति तदित्यधिकरणप्रश्नः' इत्येव एकोनविंशश्लोकव्याख्या मुंबापुरीमुद्रितकोशे दृश्यते ।

एवं पृष्टः प्राह भगवान्*—

**सनत्सुजात उवाच—**

**नाभाति शुक्लमिव लोहितमिवाथो**
**कृष्णमथार्जुनं वा काद्रवं वा ॥**
**न पृथिव्यां तिष्ठति नान्तरिक्षे**
**नैतत्समुद्रे सलिलं बिभर्ति ॥ २० ॥**

**न एतत्** ब्रह्म शुक्लादिरूपत्वेन अवभासते, अरूपत्वाद्ब्रह्मणः। श्रूयते च—

**ततो यदुत्तरतरं तदरूपमनामयम् ।**†

इति, 'अशब्दमस्पर्शमरूपम्'‡ इति च। तथा **न पृथिव्यां तिष्ठति नान्तरिक्षे**। तथा च श्रुतिरन्यत्रावस्थानं दर्शयति—'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि'§ इति। कस्मात्पुनः कारणात्पृथिव्यादिषु न तिष्ठतीति? तत्राह—**नैतत्समुद्रे सलिलं बिभर्ति** पञ्चभूतात्मकं देहं बिभर्ति। सलिलशब्दो भूतपञ्चकोपलक्षणार्थः यथा—

**अप एव ससर्जादौ तासु वीर्यमपासृजत् ।**¶

---

* '...भगवान् द्वाभ्या' इति क्वचित्पाठः. तथा 'नाभाति' इति श्लोकानन्तरम्

न तारकासु न च विद्युदाश्रित
न चाभ्रेषु दृश्यते रूपमस्य ।
न चापि वायौ न च देवतासु
नैतच्चन्द्रे दृश्यते नोतसूर्ये ॥ इति श्लोकश्च अधिको दृश्यते.

† श्वे. ३-१०. ‡ कठ. ३-१५. § छा. ७-२४-१. ¶ मनु. १-८.

इत्यत्र अप्शब्दो भूतपञ्चकोपलक्षणार्थः । श्रूयते च—'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'* इति अपामेव पुरुषशब्दवाच्यत्वम् । एतदुक्तं भवति—यदि ब्रह्मणः संसारान्तर्वर्तित्वं भवेत्तदा संसारानुप्रविष्टत्वात् घटादिवदीदृग्रूपादिमत्त्वं अन्यस्मिंश्चावस्थानं भवेत् । इदं पुनरपूर्वादिलक्षणत्वात् संसाराननुप्रविष्टमेव ब्रह्म, तस्माद्रूपादिरहितमेव तदिति ॥ २० ॥

तर्हि न[1] कस्य कुत्राप्युपलभ्यते इत्याह—

नैवर्क्षु तन्न यजुष्षु नाप्यथर्वसु
न दृश्यते वै विमलेषु सामसु ।
रथन्तरे बार्हते वाऽपि राजन्
महाव्रतस्यात्मनि दृश्यते तत् ॥ २१॥

'ज्ञानं च सत्यं च' इत्युपक्रम्य 'महाव्रता द्वादश ब्राह्मणस्य' इति ये गुणा उक्ताः तत्संयुक्तस्यात्मनि दृश्यते तत् परं ब्रह्म । न घटादिवदिदन्तया सिध्यति, अपित्वात्मन्येवात्मतया सिध्यतीत्यर्थः ॥ २१ ॥

इदानीं तत्स्वरूपं तद्दर्शनं तत्फलं च निर्दिशति श्लोकद्वयेन—

अवारणीयं तमसः परस्तात्
तदन्ततोऽभ्येति विनाशकाले ।
अणीयरूपं च तथाऽप्यणीयसां
महत्स्वरूपं त्वपि पर्वतेभ्यः ॥ २२ ॥

---

*छा. ५-९-१.

[1] 'तर्हि न' इत्येतन्नास्ति क्वचित्.

**तदेतदह्ना संस्थितं भाति सर्वं**
**तदात्मवित्पश्यति ज्ञानयोगात् ।**
**तस्मिन् जगत्सर्वमिदं प्रतिष्ठितं**
**य एतद्विदुरमृतास्ते भवन्ति ॥ २३ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामुद्योगपर्वणि धृतराष्ट्रसनत्कुमारसंवादे श्रीमत्सनत्सुजातीये तृतीयोध्यायः.

---

यदिदं महाव्रतस्यात्मनि दृश्यते तत् **अवारणीयं** ब्रह्म सर्वगतत्वात् । **तमसः** अज्ञानात् परस्तात् । तत् ब्रह्म अन्ततोऽभ्येति जगत् विनाशकाले प्रळयकाले अणीयरूपं च तथाप्यणीयसां महत्स्वरूपं त्वपि पर्वतेभ्यः । श्रूयते च— 'अणोरणीयान् महतो महीयान्'* इति । दृश्यन्ते च येणुत्वमहत्त्वादयो लोके **तदेतत्** सर्वं जगत् अह्ना अह्नो रूपेण प्रकाशरूपेण ब्रह्मणि **संस्थितं** तदात्मनैव **भाति** । श्रूयते च— 'तस्य भासा सर्वमिद विभाति'* इति, 'येन सूर्यस्तपाति तेजसेद्धः'† इति च । तत् ब्रह्म **आत्मवित्पश्यति ज्ञानयोगात्** न कर्मयोगेन । **तस्मिन्** एव परमात्मनि **जगत्सर्वमिदं प्रतिष्ठितम्** । **य एतद्विदुरमृतास्ते भवन्ति** ॥ २२–२३ ॥

इति श्रीसनत्सुजतीयविवरणे तृतीयोध्यायः.

---

*श्वे. उ. ३-२०, ६-१४. †तै. ब्रा. ३-१२-१९.

[1]"अवारणीयं तमसः परस्तात्' इत्यादिना ब्रह्मणो रूपं निर्धार्य 'तदात्मवित्पश्यति ज्ञानयोगात्' इति ज्ञानयोगेनात्मदर्शनमुक्तम् । पुनरपि तस्य स्वरूपं दर्शयित्वा योगिनस्तद्रूपं पश्यन्तीत्याह—

**यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।**
**यद्वै देवा उपासते यस्मादर्को विराजते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १ ॥**

**यत्** ब्रह्मवित्पश्यति ज्ञानयोगात् यत् ज्ञात्वाऽमृता भवन्ति तत् **शुक्रं** शुद्धं अविद्यादिदोषरहितं **महज्ज्योतिः** सर्वावभासकत्वात् । श्रूयते च—'तस्य भासा सर्वमिदं विभाति'* इति । **दीप्यमानं** भ्राजमानं **महद्यशः** । श्रूयते च—'तस्य नाम महद्यशः'† इति । **यद्वै** ब्रह्म **देवाः** इन्द्रादयः **उपासते** । श्रूयते च—

तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ।‡

इति । **यस्मात्** परज्योतिषो ब्रह्मणः **अर्कः** आदित्यो **विराजते**, 'येन सूर्यस्तपति तेजसेद्धः'§ इति श्रुतेः । एवम्भूतं **परमात्मानं** भगवन्तं **सनातनं योगिन** एव **पश्यन्ति** न पुनर्ज्ञानयोगरहिताः ॥ १ ॥

---

[1]अत्र सनत्सुजातीये तृतीयाध्यायानन्तरं अन्तिमाध्यायात्पूर्वं (२१) श्लोकसमितः कश्चिदध्यायः केषुचित्कोशेषु दृश्यते । तथा तदध्यायव्याख्याऽपि शङ्कराचार्यविरचितत्वेन केषुचिल्लिखितकोशेषु मद्रासनगरमुद्रितकोशे च उपलभ्यते. परं तु सा व्याख्या नीलकण्ठीयव्याख्याता न लेशतोऽपि भिद्यत इति नेह तदध्यायः तद्व्याख्यानं च योजितमस्माभिः ॥

*श्वे. उ. ६-१४. †याज्ञिक्यु. १. ‡बृह. ६-४-१६. §तै. ब्रा. ३-१२-९.

इदानीं परस्मादेव ब्रह्मणो हिरण्यगर्भाद्युत्पत्तिं दर्शयति—

**शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते ।**
**तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम् ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥२॥**

**शुक्रात्** शुद्धात् पूर्वोक्तात् ब्रह्मणो हिरण्यगर्भाख्यं **ब्रह्म प्रभवति** उत्पद्यते। अथोत्पन्नं **ब्रह्म शुक्रेण वर्धते** विराडात्मना। **तच्छुक्रं** शुद्धं ब्रह्म **ज्योतिषां** आदित्यादीनां **मध्ये** तैः **अतप्तं** अप्रकाशितं सत् **तपति** स्वयमेव प्रकाशते तेषामपि **तापनं** प्रकाशकम्। योन्यानवभास्य सर्वविभासकस्स्वयमेवावभासते तं **भगवन्तं योगिन** एव **पश्यन्ति** ॥ २ ॥

इदानीं पूर्णवाक्यार्थं कथयति—

**पूर्णात्पूर्णमुद्धरन्ति पूर्णात्पूर्णं प्रचक्षते ।**
**हरन्ति पूर्णात्पूर्णं च पूर्णेनैवावशिष्यते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥३॥**

**पूर्णात्** देशतः कालतो वस्तुतश्चापरिच्छिन्नात् परमात्मनः **पूर्णं** एव **उद्धरन्ति** जीवरूपेण। यत् पूर्णात् पूर्णं उद्धृतं जीवात्मना अतः **पूर्णात्** उद्धृतत्वादेव इदमपि जीवस्वरूपं **पूर्णं** एव **प्रचक्षते** विद्वांसः। तथा—**हरन्ति पूर्णात्** जीवात्मनाऽवस्थितात् **पूर्णं** आत्मस्वरूपमात्रं देहेन्द्रियाद्यनुप्रविष्टं देहेन्द्रियादिभ्यो निष्कृष्य तत्साक्षिणं सर्वान्तरं देहद्वयादुद्धरन्तीत्यर्थः। ततः उद्धृतेनैव[1] मूलभूतेन पूर्णानन्देन **अवशिष्यते** तेनैव पूर्णानन्देन

ब्रह्मणा संयुज्यते चित्सदानन्दाद्वितीयब्रह्मात्मना अवतिष्ठत इत्यर्थः । 'पूर्णमेवावशिष्यते' इति वा पाठः; यदा देहेन्द्रिया-दिभ्यो निष्कृष्य तत्साक्षिणं सर्वान्तरं देहद्वयादुद्धरन्ति तदा पूर्णमेवावशिष्यत इत्यर्थः । तथाच श्रुतिः—

**पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ इति ॥**

अस्यायमर्थः—पूर्णं अदः तच्छब्दवाच्यं जगत्कारणं ब्रह्म । पूर्णमिदं त्वंशब्दनिर्दिष्टं प्रत्यगात्मस्वरूपम् । अनयोस्तत्त्वंपदार्थयोः कथं पूर्णत्वमिति चेत् तत्राह—पूर्णात् अनवच्छिन्नात् पूर्णमेवोदच्यते उद्रिच्यते जीवेश्वररूपेण यस्मात् तस्मादनयोः पूर्णत्वमित्यर्थः । पूर्णस्य तत्त्वमात्मनाऽवस्थितस्य पूर्णं रूपमादाय तत्त्वंपदार्थशोधनं कृत्वा शोधितपदार्थस्मन्नित्यर्थः । पूर्णमेव ब्रह्म अवशिष्यते पूर्णमेव ब्रह्म भवतीत्यर्थः । यः पूर्णस्वरूपस्तं परमात्मानं योगिन एव पश्यन्ति ॥ ३ ॥

इदानीं द्वासुपर्णेति मन्त्रार्थं कथयति—

**आपोऽथाद्यस्सलिलं तस्य मध्ये**
**उभौ देवौ शिश्रियातेऽन्तरिक्षे ।**
**आदध्रीचीस्सविषूचीर्वसाना-**
**वुभौ बिभर्ति पृथिवीं दिवं च ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥४॥**

अस्मात्परमात्मनः **आपः** प्रथमं सृष्टाः । तथा चाह मनुः—

**अप एव ससर्जादौ ।***

---

*१-८.

इति । भूतपञ्चकोपलक्षणार्थः अप्छब्दः । अनेन सूक्ष्म[1]सृष्टिरभिहिता । **अथ** अनन्तरं **अद्भ्यः** पूर्वसृष्टाभ्यः सलिलं भूतपञ्चकात्मकं स्थूलदेहादिकं सृष्टम् । तस्य सलिलस्य देहात्मनाऽवस्थितस्य मध्ये अन्तरिक्षे हृदयाकाशे **उभौ** जीवपरमात्मानौ **देवौ** द्योतनस्वभावौ **शिश्रियाते** वर्तेते । न केवलमन्तरिक्ष एव शिश्रियाते **आद्ध्रीचीः सविषूचीः वसानौ** आभिमुख्येन ध्रियमाणा वा स्थिता वा अञ्चन्तीति[2] आद्ध्रीच्यो दिशः । विषूच्य उपदिशः, विष्वग्गमनात् ; ताभिस्सह वर्तन्त इति सविषूच्यः प्राच्याद्यास्सर्वा दिशः **वसानौ** आच्छादयन्तौ **उभौ बिभर्ति पृथिवीं दिवं च** एको जीवः आत्मनः स्वाभाविकनित्यसदानन्दाद्वितीयब्रह्मात्मतत्त्वमनवगम्यानात्मनि देहादावात्मभावमापन्नः पृथिवीं भूतभौतिकलक्षणं कर्मफलानुरूपं सुखदुःखात्मकदेहादिकं बिभर्ति । अपरो दिवं द्योतनात्मकं स्वात्मरूपं बिभर्ति । श्रूयते च—

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥***

इति । यस्स्वात्ममायया स्वमात्मानं प्राणाद्यनन्तभेदं[3] कृत्वाऽन्तराऽनुप्रविश्य अभिपश्यन् आस्ते तं **भगवन्तं योगिन एव पश्यन्ति** ॥४॥

इदानीं ज्ञानिनः स्वात्मन्यवस्थानं दर्शयति—

# चक्रे रथस्य तिष्ठन्तं ध्रुवस्याव्ययकर्मणः ।
# केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ॥
# योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥५॥

---

[1] सूत्र. [2] 'ध्रियमाणानवस्थितानञ्चन्तीति ' 'ध्रियमाणाः अवस्थितास्ता अञ्चन्तीति ' इति पाठान्तरम्.

[3] 'प्राणाद्यनन्त ' 'प्राणाद्यनन्तर ' इति च पाठान्तरम्. *श्वेता. ४-६.

**ध्रुवस्याव्ययकर्मणः** परमेश्वरस्य चेश्वरात्मनाऽवस्थितस्य **रथस्य** शरीरस्य त्रैलोक्यात्मनाऽवस्थितस्य **चक्रे** चङ्क्रमणात्मके देहे तिष्ठन्तं **केतुमन्तं** प्रज्ञावन्तं अत एव च **दिव्यं** अप्राकृत जरामरणादिविवर्जितं **दिवि** द्योतनात्मके अनुदितानस्तमितज्ञाना-त्मनाऽवस्थिते पूर्णानन्दे ब्रह्मणि **वहन्त्यश्वाः** इन्द्रियाणि । एतदुक्तं भवति—यद्यपीन्द्रियाणि स्वभावतो विषयेष्वेव वर्तन्ते, तथाऽपि विज्ञानसारथिना समाकृष्यमाणानि केतुमन्तं पुरुषं दिव्येव वहन्ति न पराग्विषय इति । तदुक्तं कठवल्लीषु—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ॥
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेवच ।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।*

इत्यादिना । यत्र परमात्मनि वहन्ति तपसा तं **भगवन्तं योगिन एव पश्यन्ति** ॥ ५ ॥

नानेन सदृशं किञ्चिद्विद्यत इत्याह—

**न सादृश्ये[1] तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चिदेनम् ।**
**मनीषयाऽथो मनसा हृदा च**
**य एनं विदुरमृतास्ते भवन्ति ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥६॥**

**अस्य** परमात्मनो **रूपं न सादृश्ये तिष्ठति** नान्येन सादृश्ये वर्तते नानेन सदृशं किंचिद्वर्तत इत्यर्थः । श्रूयते च—

---

* १-३-३, ४.

[1] संदृशे इत्यपि पाठः

**न तस्य प्रतिमाऽस्ति यस्य नाम महद्यशः ।***

इति । अत एव उपमानाद्यविषयत्वम् । तथा **न चक्षुषा पश्यति कश्चित्** अपि एनं सर्वान्तरं परमात्मानम् । कथं तर्हि पश्यन्ति? **मनीषया** अध्यवसायात्मिकया **मनसा** संकल्पविकल्पात्मकेन **हृदा च** हृदयेन च साधनभूतेन । हृदयं विना नान्यत्र परमात्मन उपलब्धिस्सम्भवतीति मत्वा हृदा चेत्युक्तम् । अथवा—न केवलं मनोबुद्धिमात्रेण, अपि तु हृदा च हृदयस्थेन च परमेश्वरेणानुगृहीतास्सन्त । **य एनं** परमात्मानं **विदुः** अयमहमस्मीति **अमृताः** अमरणधर्माणो **भवन्ति** । अथवा—हृदा हृदयेन परमात्मना । तथा च हृत्स्थे परमात्मनि हृदयशब्दं निर्वक्ति—'स एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमिति अहरहर्वा एवंवित्स्वर्गं लोकमेति'[†] इति । तथा च श्रुतिः तदधीनात्मसिद्धिं दर्शयति—

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥***

इति । एवं ये विदित्वा अमृता भवन्ति त **योगिन एव पश्यन्ति** ॥ ७ ॥

इदानीं इन्द्रियाणां विषयेषु प्रवृत्तिरनर्थाय भवतीत्याह—

# द्वादश पूगास्सरितो देवरक्षिता मध्वीशते ।
# ‡तदनुविधायिनस्तदा सञ्चरन्ति[1] घोरम् ॥
# योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥७॥

---

*श्वेता. ४-१९-६-२३. †छान्दो. ८-३-३.

‡ 'तदनुविधायिनः' इति श्लोके कतिपयकोशेषु न दृश्यते. [1]संसरन्ति.

ये द्वादश पूगा कर्मज्ञानेन्द्रियाणि, एकादशं मनः, द्वादशी बुद्धिः, तेषामनेकपुरुषापेक्षया एकैकस्य पूगत्वमुच्यते । सरितः सरणशीलाः देवरक्षिताः देवेन परमात्मना रक्षिताः मधुवत् विषयं मधु ईशते नियमयन्ति अस्मात्कर्मेण स्वंस्वं विषयमनुभवन्तीत्यर्थः । यदेवमनुभवन्ति तदा तदनुविधायिनो विषयपराः सञ्चरन्ति घोरं संसारम् । तस्मात् न्द्रियाणि विषयेभ्य उपसंहृत्य स्वात्मन्येव वशं नयेदित्यर्थः । येन रक्षिता मध्वीशते तं देवं योगिन एव पश्यन्ति ॥ ७ ॥

किंच दृष्टान्तदार्ष्टान्तिकयोस्तत्त्वाभिधानम्—

**तदर्धमासं पिबति सञ्चितं भ्रमरो मधु ।**

**ईशानस्सर्वभूतेषु हविर्भूतमकल्पयत् ॥**

**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥८॥**

यथा—मधुकरो भ्रमरः अर्धमासोपार्जितं अर्धमासं संचितं मधु अर्धमासं पिबति एवमन्यत्र भ्रमरः भ्रमणशीलत्वात्संसारी तद्विषयं मधु अर्धमाससञ्चितं अर्धमासं पिबति पूर्वजन्मसञ्चितं कर्म अन्यस्मिन्जन्मनि भुङ्क्ते इति यावत् । भवेदप्यैहिकफलात्कर्मणः फलसिद्धिः, कर्मानन्तरभावित्वात्, कथंपुनरामुष्मिकफलात्कर्मणः फलसिद्धिस्स्यात्, कर्मणो [illegible]नित्यात्वाशङ्क्याह—ईशान इति । भवेदयं दोषः यदि [illegible] फलसिद्धिस्स्यात् ईशानः परमेश्वरः कृतप्रयत्नापेक्षस्सन् सर्वेषु प्राणिषु प्राणाग्निहोत्रस्येतरस्य च तत्कर्मानुसारेण हविर्भूतं अन्नादिकं अकल्पयत् । य ईशानस्सर्वभूतेषु हविर्भूतमकल्पयत् तं भगवन्तं योगिन एव पश्यन्ति ॥ ८ ॥

किं च—किमेते मध्वाशिनो बम्भ्रम्यमाणाः परिवर्तन्त एव सर्वदा? किं वा ज्ञानं लब्ध्वा मुक्ता भवन्ति? इत्याशङ्क्याह—

**हिरण्यपर्णमश्वत्थमभिपत्य ह्यपक्षकाः ।**
**तत्र ते पक्षिणो भूत्वा प्रपतन्ति यथासुखम् ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ९ ॥**

ये **अपक्षकाः** ज्ञानपक्षरहिताः मध्वाशिनः परिवर्तन्ते ते **हिरण्यपर्णमश्वत्थं** हितं च रमणीयं चेति हिरण्यं हितं रमणीयं च पर्णं यस्याश्वत्थस्य । तथा च भगवान्वासुदेवः—

छन्दांसि यस्य पर्णानि ।*

इति । ते हिरण्यपर्णमश्वत्थं **अभिपत्य** आरुह्य वेदसंयोगि-ब्राह्मणादिदेहं प्राप्येत्यर्थः । **तत्रैव** ब्राह्मणादिदेहे **पक्षिणो** ज्ञानिनो **भूत्वा** । तथा च ब्राह्मणम्—'ये वै विद्वांसस्ते पक्षिणो ये अविद्वांसस्ते अपक्षाः' इति । **प्रपतन्ति** तथा **सुखं** मुक्ता भवन्तीत्यर्थः । यं ज्ञात्वा प्रपतन्ति तं **योगिन** एव **पश्यन्ति** ॥ ९ ॥

इदानीं योगं दर्शयति—

**अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।**
**आदित्यो गिरते चन्द्रमादित्यं गिरते परः ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १० ॥**

---

*भगव. १५-१.

**अपानं गिरति** उपसंहरति **प्राणः। प्राणं गिरति चन्द्रमाः** मनः उपसंहरति। मनसश्चन्द्रमा अधिदैवतं, तस्माच्चन्द्रमश्शब्देन मन उच्यते। तं **चन्द्रं** मन **आदित्यो** बुद्धिं **गिरते**। बुद्धेश्चादित्योऽधिदैवतम्। तं **आदित्यं** बुद्धिं **गिरते परः** परं ब्रह्म। एतदुक्तं भवति—समाधिवेळायामपानं प्राण उपसंहृत्य प्राणं मनसि मनश्च बुद्धौ बुद्धिं परमात्मन्युपसंहृत्य स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनैवावतिष्ठत इत्यर्थः॥ १०॥

इदानीं परस्य जीवात्मनाऽवस्थानं दर्शयति—

**एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन्।**
**तं चेत्सततमुत्क्षिपेत् न मृत्युर्नामृतं भवेत्॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्॥११॥**

हन्त्यविद्यां तत्कार्यं चेति **हंसः** परमात्मा भूतभौतिकलक्षणात्संसारात् **सलिलात् उच्चरन्** ऊर्ध्वं चरन् संसाराद्बहिरेव वर्तमानः **एकं** जीवाख्यं **पादं नोत्क्षिपति** नोद्धरति नोपसहरति रूपंरूपं प्रतिरूपोवतिष्ठत इत्यर्थः। श्रूयते च कठवल्लीषु—

**एकस्तथा सर्वभूतान्तरात्मा।***

इति। कस्मात्पुनरेकं पादं नोत्क्षिपतीत्यत आह—तं जीवाख्यं **पादं सततं** सन्ततयायिनं यदि **उत्क्षिपेत्** स्वमायया स्वमात्मानं प्राणाद्यनन्तभेदं कृत्वा तेष्वनुप्रविश्य जीवात्मना यदि नावतिष्ठेत् तदा **न मृत्युः** न जननमरणादिलक्षणोनर्थः संसारो भवेत् संसारिणो

---

*कठ. ५-९.

जीवस्याभावात् । तथा—अमृतं अमृतत्वं मोक्षो न भवेत् अननुप्रविष्टस्य दर्शनासम्भवात् । तथा च तदर्थमेव अनुप्रवेशं दर्शयति—'रूपंरूपं' इति । तथा चाथर्वणी श्रुतिः—

एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
स चेदुत्क्षिपेत्पादं न मृत्युर्नामृतं भवेत् ॥

इति, 'एकं रूपं बहुधा यः करोति'* इति च । यः पादरूपेण जीवात्मना त्रिपादरूपेण चित्सदानन्दाद्वितीयेन ब्रह्मात्मनाऽवस्थितः तं परमात्मानं योगिन एव पश्यन्ति ॥ ११ ॥

केन तर्ह्युपाधिना परः पादात्मना अवतिष्ठत इत्याशङ्क्य परस्यैव लिङ्गोपाधिकं जीवात्मानं दर्शयति—

**अङ्गुष्ठमात्रः पुरुषोन्तरात्मा**
**लिङ्गस्य योगेन स याति नित्यम् ।**
**तमीशमीड्यमनुकल्पमाद्यं**
**पश्यन्ति मूढा न विराजमानम् ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १२**

स एव सच्चिदानन्दाद्वितीयः अन्तरात्मा सर्वभूतान्तरात्मा, पुरुषः पूर्णः परमात्मा लिङ्गस्य योगेन अङ्गुष्ठमात्रः अङ्गुष्ठमात्रपरिमाणपरिच्छिन्नस्सन् याति संसरति नित्यम् । कस्मात्पुनः कारणात् लिङ्गयोगेन अङ्गुष्ठमात्रस्संसरति? तत्राह—यो लिङ्गस्य योगेनाङ्गुष्ठमात्रस्संसरति तं ईशं सर्वस्येशितारं ईड्यं स्तुत्यं अनुकल्पं सर्व-

---

*कठ. ५-१२.

मनुप्रविश्य आत्मना कल्पयतीत्यनुकल्पं **आद्यं** आदौ भवं **विराजमानं** दीप्यमानं यस्मात् **मूढाः** अविवेकिनो देहद्वयात्माभिमानिनो **न पश्यन्ति** तस्मादेवात्मनो ब्रह्मभावानवगमात्संसरन्तीति । यमात्मानमपश्यन्तः संसरन्ति **तं योगिन** एव **पश्यन्ति** ॥ १२ ॥

इदानीं इन्द्रियाणां च विषयाणां च अनर्थहेतुत्वं दर्शयति—

**गूहन्ति सर्पा इव गह्वरेषु**
**क्षयं नीत्वा स्वेन वृत्तेन मर्त्यान् ।**
**ते विप्रमुह्यन्ति जना विमूढाः**
**तैर्दत्ता भोगा मोहयन्ते भवाय[1] ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१३**

यथा **सर्पा** गह्वरेभ्यो निष्क्रम्य **स्वेन वृत्तेन** विषप्रदानेन **मर्त्यान् क्षयं नीत्वा गह्वरेषु गूहन्ति** स्वमात्मानं प्रच्छादयन्ति एवमिन्द्रियसर्पाः श्रोत्रादिषु शयाना श्रोत्रादिभ्यो निर्गत्य स्वेन वृत्तेन विषयविषप्रदानेन मर्त्यान् क्षयं नीत्वा गह्वरेषु गूहन्ति स्वमात्मानं प्रच्छादयन्ति **ते विप्रमुह्यन्ति** विषयविषाभिभूताः विशेषेण मुह्यन्ति, व्यतिरिक्तं किञ्चिन्न जानन्तीत्यर्थः । तथाच श्रुतिः— 'यथा प्रियया स्त्रिया सम्परिष्वक्त' '* इति । **तैः** इन्द्रियसर्पैः **दत्ताः भोगाः** विषकल्पाः विषयाः मर्त्यान् **मोहयन्ते** पुनःपुनर्मोहहेतवो भवन्ति । यदिदं विषयैर्मोहनं तत् **भवाय** गर्भजन्मजरामरणसं-

---

[1] 'तैर्दत्ता वै मोहयन्ते भयाय ' इत्यपि पाठः तदनुसारेण क्वचिद्व्याख्याकोशेष्वपि भोगपदं न दृश्यते. 'भयाय संसारभयाय' इति च दृश्यते. *बृह. ६-३-२१.

साराय भवति । यमनवद्यं अनुकल्पमाद्यं अदृष्ट्वा विषयविषान्धाः मुह्यन्ति तं योगिन एव पश्यन्ति[1] ॥ १३ ॥

ज्ञानिनां मोक्षस्वरूपमाह—

**असाधना वाऽपि ससाधना वा**
**समानमेतद्दृश्यते मानुषेषु ।**
**समानमेतदमृतस्येतरस्य**
**युक्तास्तत्र मध्व उत्सं समापुः ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १४**

ये **असाधनाः** शमदमादिसाधनरहिताः ये च शमादिसाधनयुक्ताः **ससाधनाः** तेषु **समानं** साधारणं आत्मस्वरूपं **दृश्यते मानुषेषु** । तथा **समानं अमृतस्य** मोक्षस्य **इतरस्य** संसारस्य सति चासति च तेषां मध्ये ये **युक्ताः** शमदमादिसाधनयुक्ताः ते तस्मिन् विष्णोः परमे पदे **मध्वः** मधुन **उत्सं समापुः** पूर्णानन्दं ब्रह्म समाप्नुवन्तीत्यर्थः । यमुत्सं सपूर्णानन्दं युक्ताः प्राप्नुवन्ति **तं योगिन** एव **पश्यन्ति** ॥ १४ ॥

---

[1]एतत्त्रयोदशश्लोकानन्तर मुम्बापुरीमुद्रितसनत्सुजातीयभाष्यकोशमात्रे एव पाठोधिको दृश्यते. नीलकण्ठीयेप्यय श्लोको व्याख्या च न दृश्यते.

संमतिमाह—नात्मानमात्मस्थमवैति मूढस्संसारकूपे परिवर्तते यः ।
त्यक्त्वाऽऽत्मरूप विषयांश्च भुङ्क्ते स वै जनो गर्दभ एव साक्षात् ॥ १४ ॥

मूढः आत्मानात्मविवेकशून्यः पुमान् आत्मस्थ आत्मनि तिष्ठन्त आत्मान न जानाति स एवाहमिति । अतः कारणात् संसारकूपे संसार एव कूपस्तस्मिन् परिवर्तते । श्वसूकरादियोनिं प्राप्नोति अपरोक्षात्मचैतन्य देहादिदोषरहित सर्वावभासक येन सूर्यस्तपति स एव तत्स्वरूप परित्यज्य अनित्यान्विषयान् भोगान् भुङ्क्ते । स जनो न—तर्हि किं ?—साक्षाद्गर्दभ एव । एवंविध पूर्वोक्तमात्मानं योगिन एव पश्यन्ति ॥

किंच—

**उभौ लोकौ विद्यया व्याप्य यान्ति**
**तदाहुतं चाहुतमग्निहोत्रम् ।**
**मा ते ब्राह्मी लघुतामादधीत**
**प्रज्ञानं स्यान्नाम धीरा लभन्ते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १५॥**

**उभौ लोकौ** इहलोकपरलोकौ[1] **विद्यया** ब्रह्मात्मत्व[2]विषयया **व्याप्य याति तत्** पूर्णानन्दं ब्रह्म । यस्मादुभौ लोकौ विद्यया व्याप्य याति तस्मात् अहुतं **चाग्निहोत्रं** अनेन आत्मज्ञानेन **आहुतं** आभिमुख्येन हुतं भवति, सर्वमग्निहोत्रादिकर्मफलमनेनैव सम्पादितं भवतीत्यर्थः । यस्मादुभौ लोकौ विद्यया व्याप्य याति यस्मादहुतं चाग्निहोत्रं हुतं भवति तस्मात् **मा ते** तव **ब्राह्मी** ब्रह्मविषया विद्या **लघुतां** लघुत्वं मर्त्यभावं कर्मवत् **आदधीत** न करोति, अपि तु प्रज्ञानं तमसः पारं परमात्मानमात्मत्वेन संपादयति यदा ब्रह्मविद्याव्याप्ततस्य[3] परमात्मानमात्मत्वेनावगच्छतः **प्रज्ञानं** इति **नाम स्यात्** ब्रह्मेति नाम भवतीत्यर्थः । तथा च श्रुतिः—' प्रज्ञानं ब्रह्म '* इति । तत्प्रज्ञानं ब्रह्म **धीरा** धीमन्तो **लभन्ते** । यत्प्रज्ञानं ब्रह्म धीरा लभन्ते **तं योगिन** एव **पश्यन्ति** ॥ १९ ॥

किंच—

---

[1] इहपरौ. [2] ब्रह्मात्मतत्त्व. [3] ब्रह्मविद्या तस्य. *ऐ. ३-३.

**एवंरूपो महानात्मा पावकं पुरुषो गिरन् ।**
**यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१६॥**

य **एवंरूपः** प्रज्ञानैकरसब्रह्मस्वरूपस्सन्नास्ते स **आत्मा महान्** सम्पद्यते ब्रह्मैव सम्पद्यत इत्यर्थः । **पावकं** अग्निं सर्वोपसंहर्तृरूपं कारणं सकारणं कार्यं **गिरन्** स्वात्मन्युपसंहरन् **यो वै तं पुरुषं** ज्ञानैकरस पुरुष पूर्णं पुरिशयं **वेद** अयमहमस्मि इति साक्षाज्जानाति **तस्य** प्रज्ञानरूपं परमात्मानं आत्मत्वेनावगच्छतः **इह** अस्मिन्नेव देहे **आत्मा न रिष्यते** न विनश्यति, विदुष उत्क्रान्तेरभावात्, उत्क्रान्तनिमित्तत्वाद्विनाशस्य । तथा च श्रुतिः प्रश्नपूर्वकमुत्क्रान्त्यभावं दर्शयति—'उदस्मात्प्राणाः क्रामन्ति आहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते'* 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद'* इति च । यं विदित्वा न रिष्यते **तं योगिन** एव **पश्यन्ति** ॥ १६ ॥

यस्मात्तद्विज्ञानादेव नात्मनो विनाशः—

**तस्मात्सदा सत्कृतस्स्यात् न मृत्युरमृतं कुतः ।**
**सत्यानृते सत्यसमानबन्धिनी**
**सतश्च योनिरसतश्चैक एव[1] ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१७**

---

*बृह. ५-२-११, ६-४-६.

[1]नीलकण्ठीये—एतच्छ्लोकस्य पूर्वार्धं—

नाह सदाऽसत्कृतस्स्यां न मृत्युर्नचामृत्युरमृत मे कुतस्स्यात् ।

इति पठ्यते । तथा—एतच्छ्लोकानन्तरम् कतिपयश्लोकानामाधिक्य व्यत्ययश्च दृश्यते.

**सदा** सर्वदा अहर्निशं **सत्कृतः स्यात्** सच्चिदानन्दाद्वितीयब्रह्मात्मत्वेनाभिमन्येत यः स सदा सत्कृतो भवति तस्य **न मृत्युः** जननमरणलक्षणः संसारो न भवेत् । **अमृतं कुतः** मृत्युसापेक्षत्वादमृतत्वस्य तदभावे कुतः प्रसक्तिः । तथा च श्रुतिः—'मृत्युर्नास्त्यमृत कुत ।' इति । **सत्यानृते च वर्तेते सत्यसमानबन्धिनी** परमार्थसत्यमेकमधिष्ठानमनुबद्ध्य वर्तेते रज्ज्वामिव सर्पः । कथमेतदवगम्यते—सत्यानृते सत्यसमानबन्धिनी इति? तत्राह—**सतश्च** लौकिकस्य **योनिः** कारणं **असतश्च** व्यावहारिकस्य रजतादेः[1] **एकमेव** अद्वितीयं **ब्रह्म** यस्मात्प्रवदन्ति तस्मात् सत्यानृते स्वकारणभूतसत्यसमानबन्धिनी इति । यदात्मतत्त्वज्ञानात्मकारणान्मृत्योर्विनाशः यमनुबद्ध्य सत्यानृते प्रवर्तेते **तं योगिन एव पश्यन्ति** ॥ १७ ॥

> **अङ्गुष्ठमात्रः पुरुषोन्तरात्मा**
> **न दृश्यतेऽसौ हृदये निविष्टः ।**
> **अजश्चरो दिवारात्रमतन्द्रितश्च**
> **स तं मत्वा कविरास्ते प्रसन्नः ॥ १८ ॥**

आकाशादिदेहान्तं जगत्सृष्ट्वा **हृदये निविष्टः अजः चरः** चराचरात्मा सन् **न दृश्यते** स्वेनात्मना चित्सदानन्दाद्वितीयेन । **तं** अहोरात्रं **अतन्द्रितो** भूत्वा कोशपञ्चकेभ्यो निष्क्रम्य सर्वान्तरात्मानं **मत्वा कविरास्ते प्रसन्नः** कृतार्थस्सन्नित्यर्थः ॥ १८ ॥

---

[1] 'तत्राह—असतश्च लौकिकस्य योनिः कारण सतश्च एकमेव कारण' इति मुम्बापुरीमुद्रितकोशे.

**तस्माच्च वायुरायातः तस्मिंश्च प्रलयस्तथा ।**
**तस्मादग्निश्च सोमश्च तस्माच्च प्राण आगतः[1]॥१९॥**

**तत्प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ।**
**भूतानि जज्ञिरे तस्मात् प्रलयं यान्ति तत्र च[2]॥२०**

सर्वमिदं ब्रह्मणस्सकाशादुद्भूत तत्रैव लीयत इति श्लोकद्वयेनोक्तम्[3], तदेव विवृणोति—

**उभौ च देवौ पृथिवीं दिवं च**
**दिशश्च शुक्रं भुवनं बिभर्ति ।**
**तस्माद्दिशस्सरितश्च स्रवन्ति**
**तस्मात्समुद्रा विहिता महान्तः ॥२१॥**

स्पष्टः श्लोकार्थः[4] ॥ २१ ॥

इदानीं ब्रह्मणोनन्तत्व कथयति—

---

[1]एतच्छ्लोकानन्तर

सर्वमेतत्ततो विद्यात्तत्तद्वक्तु न शक्नुमः ।
योगिनस्त प्रपश्यन्ति भगवन्त सनातनन ॥
इत्यय श्लोकः मुम्बामुद्रितकोशे दृश्यते.

[2]एतच्छ्लोकद्वय नीलकण्ठीये न दृश्यते ।

[3]'ब्रह्मणो विश्वोपादानत्वमाह द्वाभ्यां' इत्यवतारिका 'स्पष्टौ' इति व्याख्याच मुंबापुरी मुद्रितकोशे ।

[4]"देवौ जीवेश्वरौ शुक्र ब्रह्म कर्तृ बिभर्ति यस्मात् ब्रह्मणः सकाशात् दिश उत्पद्यन्ते 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति श्रुतेरर्थः प्रतिपादितः" इति मुबामुद्रितकोशे.

**यस्संहस्रं सहस्राणां पक्षानाहृत्य संपतेत् ।**
**नान्तं गच्छेत्कारणस्य यद्यपि स्यान्मनोजवः ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्॥ २२ ॥**

यः पुरुषः **सहस्राणां सहस्रं पक्षानाहृत्य** आत्मनः पक्षान् कृत्वा **संपतेत्** अनेकशः कोटिकल्पमपि पुरुषो **नान्तं गच्छेत् कारणस्य** सर्वकारणस्य परमात्मनः **यद्यपि** असौ **मनोजवः स्यात्** तथाऽपि तस्यान्तं न गच्छेत् । यस्मादन्त न गच्छेत् तस्मादनन्तः परमात्मेत्यर्थः । योनन्तः परमात्मा तं **योगिन** एव **पश्यन्ति** ॥२२॥

किंच—

**अदर्शने तिष्ठति रूपमस्य**
**पश्यन्ति चैनं सुसमिद्धसत्त्वाः ।**
**हीनो मनीषी मनसाऽभिपश्येत्**
**य एनं विदुरमृतास्ते भवन्ति ॥ २३ ॥**

**अदर्शने** दर्शनायोग्ये विषये **तिष्ठति रूपमस्य** परमात्मनः । तथा च श्रुतिः—'न सन्दृशे तिष्ठति रूपमस्य'* इति । **पश्यन्ति चैनं सुसमिद्धसत्त्वाः** यद्यपि दर्शनायोग्ये तिष्ठति तथाऽपि परमात्मानं पश्यन्ति ते । के? सुसमिद्धसत्त्वाः सुष्ठु समिद्धं सम्यग्दीप्तं यदन्तःकरणं यज्ञादिभिः विमलीकरणद्वारेण येषां ते सुसमिद्धसत्त्वाः । यस्मादेवं तस्मात् **हीनो** रागद्वेषादिमलरहितो विशुद्धसत्त्वो **मनीषी मनसाऽभिपश्येत्** । **य एनं** परमात्मानं **विदुः** अहमस्मीति **अमृता** अमरणधर्माणो **भवन्ति ते** ॥ २३ ॥

---

*याज्ञिक्यु. १.

**इमं यस्सर्वभूतेषु आत्मानमनुपश्यति ।**
**अन्यत्रान्यत्र युक्तेषु स किं शोचेत्ततः परम् ॥२४॥**

इमं सर्वान्तरं सर्वभूतेषु सर्वप्राणिषु आत्मानं यः अनुपश्यति । कथंभूतेष्वनुपश्यति—अन्यत्रान्यत्र देहेन्द्रियादियुक्तेषु शरीराद्यभिमानिषु । सः किं शोचेत् ततः परं सर्वभूतेषु स्वात्मानं पश्यन् ततः परं किमर्थमनुशोचति सर्वभूतस्थमात्मानमनुपश्यन् कृतार्थत्वान्नानुशोचतीत्यर्थः । तथा च श्रुतिः—

**तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः ।*** इति ॥ २४ ॥

तदेवाह—[1]

**यथोदपाने महति सर्वतस्संप्लुतोदके ।**
**एवं भूतेषु सर्वेषु ब्राह्मणस्य विशेषतः[2] ॥ २५ ॥**

यथा सर्वतस्संप्लुतोदके महत्युदपाने कृतकृत्यस्य अर्थो नास्ति एवं सर्वेषु भूतेषु आत्मानं पश्यतः ब्राह्मणस्य विशेषतः[3] न किंचिदपि प्रयोजनं विद्यत इत्यर्थः । तथा चाह भगवान् वासुदेवः—

**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ।†** इति ॥ २५ ॥

इदानीं उक्तस्यार्थस्य द्रढिम्ने वामदेवादिवत्स्वानुभवं दर्शयति[4]

**अहमेवास्मि वो माता पिता पुत्रोस्म्यहं पुनः ।**
**आत्माऽहमस्मि सर्वस्य यच्च नास्ति यदस्ति च ॥२६**

---

[1] इयमवतारिका मुद्रामुद्रितकोशमात्रे वर्तते. [2] 'विजानतः' इति मुं. कोशे
[3] विजानतः सर्ववेदोदिते कर्मादौ इत्यधिकः मु. कोशे.
[4] मुं. कोशे—'सार्धैस्त्रिभिः' इत्यधिकं.

*ईशोप. ७. †भगव. ३-१८.

हे धृतराष्ट्र! अहमेवास्मि वो युष्माकं माता जनयित्री पिता अपि अहमेव । युष्माकं पुत्रोस्मि दुर्योधनादिरहमस्मि । किं बहुना—आत्माऽहमस्मि सर्वस्य प्राणिजातस्य यच्च नास्ति यदस्ति च तस्याहमेवात्मा ॥ २६ ॥

एवं तावदाधिभौतिकपित्रादिकं दर्शितम् । अथेदानीमाधिदैविक-पित्रादिभावं दर्शयति—

**पितामहोस्मि स्थविरः पिता पुत्रश्च भारत ।**
**ममैव यूयमात्मस्था न मे यूयं न चाप्यहम् ॥२७॥**

**पितामहोस्मि स्थविरः** वृद्ध इन्द्रादेः पितामहः अनादिसिद्धः परमात्मा सोप्यहमेव । यः **पिता** इन्द्रादेः हिरण्यगर्भः सोप्यहमेव । तथा **ममैव यूयमात्मस्थाः** । एवं **यूयं** सर्वे परमार्थतो **न मे** आत्मनि व्यवस्थिताः **न चाप्यहं** युष्मासु व्यवस्थितः । तथा चाह भगवान्—

मत्स्थानि सर्वभूतानि ॥* इति ॥२७॥

यद्यपि न ममात्मनि यूयं व्यवस्थिताः न चाप्यहं युष्मासु व्यवस्थितः, तथाऽपि—

**आत्मैव स्थानं मम जन्म चात्मा**
**ओतप्रोतोहमजरप्रतिष्ठः ।**
**अजश्चरो दिवारात्रमतन्द्रितोहं**
**मां विज्ञाय कविरास्ते प्रसन्नः ॥ २८ ॥**

---

*भगव. ९-४.

**अणोरणीयान् सुमनास्सर्वभूतेष्ववस्थितः ।**
**पितरं सर्वभूतानां पुष्करे निहितं विदुः ॥ २१ ॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां उद्योगपर्वणि धृतराष्ट्रसनत्कुमारसंवादे श्रीसनत्सुजातपर्वणि चतुर्थोऽध्यायः.**

---

**आत्मैव स्थानं** आत्मैवाश्रयः **जन्म चात्मा** अस्मादेवात्मनः सर्वं समुत्पन्नम् । तथा च श्रुतिः—'आत्मैवेदं सर्वम्'* इति । **ओतप्रोतोहमेव** ओतप्रोतरूपेण व्यवस्थितः जगदात्मा युष्माकं जनयिता **अजरप्रतिष्ठः** अजरे जरामरणवर्जिते स्वे महिम्नि तिष्ठतीत्यजरप्रतिष्ठः । तथा च श्रुतिः—'स भगवः कस्मिन्प्रतिष्ठित' स्वे महिम्नीति यदि वा न महिम्नि '* इति ॥

**अणोः** सूक्ष्मात् **अणीयान्** सूक्ष्मतरः **सुमनाः** शोभनं रागद्वेषमदमात्सर्यशोकमोहादिधर्मवर्जितं केवलं चित्सदानन्दाद्वितीयब्रह्मात्माकारं मनो यस्येति सुमनाः **सर्वभूतेषु** सर्वेषु प्राणिषु हृदयकमलमध्ये अहमेव **अवस्थितः** आत्मतया ॥

एवं तावत्स्वानुभवो दर्शितः । इदानीं न केवलमस्माकमनुभव एवात्र प्रमाणं; अन्येऽप्येवमेवावगच्छन्तीत्याह—**पितरं सर्वभूतानां पुष्करे निहितं विदुः** । इति । येऽन्ये सनकसनन्दनवामदेवादयो ब्रह्मविदः तेऽपि **पितरं सर्वभूतनां** सर्वप्राणिनां पिता जनयिता यः परमेश्वरः तं **पुष्करे** हृत्पुण्डरीकमध्ये **निहितं विदुः** परमात्मानमात्मत्वेनावगच्छन्तीत्यर्थः । तथा च श्रुतिः तेषामनुभवं दर्शयति—'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं

---

*छान्दो. ७-२५-२, ७-२४-१.

सूर्यश्च '* इति बृहदारण्यके । 'एतत्साम गायन्नास्ते '† इति तैत्तिरीयके सामगानेन स्वानुभवो दर्शितः आत्मनः कृतार्थत्वद्योतनार्थम् । तथा छान्दोग्येऽपि—'तद्धास्य विजज्ञाविति '‡ इति । तलवकारे च—'अहमन्नम्' इत्यादिना विदुषः स्वानुभवो दर्शितः । तत्रैते श्लोका भवन्ति—

नित्यशुद्धबुद्धमुक्तभावमी [मै?] शमात्मना[1] ।
भावयन् षडिन्द्रियाणि संनियम्य निश्चलः ॥ १ ॥

अस्ति वस्तु चिद्घनं जगत्प्रसूतिकारणम् ।
न नश्वरं तदुद्भवं[2] जगत्तमोनुदं च यत् ॥ २ ॥

तत्पदैकवाचकं सदाऽमृतं निरञ्जनम् ।
चित्तवृत्तिदृक्सुखं[3] तदस्म्यहं तदस्म्यहम् ॥ ३ ॥

इति ॥ २९ ॥

इति सनत्सुजतीयविवरणे शङ्करभगवत्पादकृते

चतुर्थोऽध्यायः.

---

[1] मात्मनः. [2] अनश्वरं च तद्भवं. [3] भूत्सुखं.

* ३-४-१०. † तै. उ. ३-१०. ‡ ६-१६-३.

# शुद्धिपत्रिका

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २ | ४ | अेप्रम | अप्रमे |
| ८ | ३१ | भवत्प्रदः | भवत्प्रभुः |
| १५ | १६ | § | † |
| ,, | २४ | †छान्दो-६-८. | †छान्दो. ६-१३. ७-२५ |
| २० | १७ | दूरासदान् | दुरासदान् |
| २४ | ४ | पञ्चथा | पञ्चधा |
| ४५ | १५ | शाश्वतस्स्थाणु | शाश्वतस्थाणु |
| ५९ | १९ | ‖ ४४ ‖ | ‖ ४५ ‖ |
| ६१ | ६ | शिष्टेष्ठः | शिष्टेष्टः |
| ७६ | २२ | भूतकृ | भूतभृ |
| ७७ | १८ | अमृतः | अमृतपः |
| ९० | २० | बह्मज्ञो | ब्रह्मज्ञो |
| १५७ | ६ | द्दत | घृत |
| २१७ | १३ | पदा | पाद |
| २२४ | २० | १९. | ९. |
| २४० | १७ | ऐत | एत |